# सरस्वतीपुराण सर्ग १५

मुण्डीश्वरसमीपस्थं, सरस्वत्यां महोदयम् ।
नाम्ना यत्प्राङ्मुखं तीर्थं, सर्वत्र भुवि विश्रुतम् ॥ १ ॥
देदीप्यमानवपुषा, वृषारूढा नरोत्तमाः ।
प्रयान्ति रुद्रभवनं, तत्र ये [1]सकृदाप्लुताः ॥ २ ॥
पितरोऽपि हि तत्तोयतर्पिता नरकादपि ।
सुपुत्रेण दिवं यान्ति, मार्कण्डेयवचो यथा ॥ ३ ॥
अत्यल्पमपि यत्तत्र, तीर्थे दत्तं समाधिना ।
दानं तत्फलमाधत्ते, शुभं जन्मशतं नृणाम् ॥ ४ ॥
तस्मात्तत्र समादेयमक्षयं फलमिच्छता ।
पुंसा हिरण्यगोवस्त्रान् द्विजेभ्यो भावितात्मना ॥ ५ ॥
सलिलं तत्सरस्वत्यामत्रस्थमपि पावनम् ।
दर्शनात् स्पर्शनात्पानात्, स्नानादप्यघनाशनम् ॥ ६ ॥
पापघ्नं दर्शनात्तत्तु, स्पर्शनात्स्वर्गदं नृणाम् ।
पानाद्ब्रह्मपदावाप्तिः, स्नानाद्विष्णुसमानता ॥ ७ ॥
तस्मात्सर्वं परित्यज्य, मतिः कार्या सुमेधसा ।
पुंसा प्राङ्मुखी तीर्थेऽस्मिन्, सततं सुखमिच्छता ॥ ८ ॥
तस्मादन्यत्परं तीर्थं, सरस्यत्यास्तटे स्थितम् ।
यत्र तेन तपस्तप्तं, माण्डव्येन महात्मना ॥ ९ ॥
इदं तत्संज्ञया लोके, सर्वत्र भूमिविश्रुतम् ।
माण्डव्येश्वरनामासौ, यत्रेशः संस्थितः स्वयम् ॥ १० ॥
अणीमाण्डव्यतां प्राप्तस्तत्रैव तपसां निधिः ।

---

१सकृदाप्लुताः P

[1]अचौरोऽपि हि [2]चौरत्वं, व्यवहारादवाप्नुयात् ॥ ११ ॥
आहैवं सुमतिः केन, कारणेन महामुनिः ।
अचौरश्चौरतां प्राप्तो, माण्डव्यः कथयस्व मे ॥ १२ ॥
मृकण्डस्त्वाह माण्डव्यो, बिल्वपत्रस्य कारणात् ।
तस्माद्वनाद्वनं प्राप्तो, गृहित्वैकां करण्डिकाम् ॥ १३ ॥
जन्मान्तरकृतेनास्य, कर्मणा चाशुभेनसा ।
तत्र स्नानार्थमायाता, राज्ञी पर्वणि सुव्रता ॥ १४ ॥
महिषी सा नरेन्द्रस्य, विख्याता धर्मवर्मणः ।
वृता कञ्चुकिभिश्चैव, वेश्याभिश्च समन्ततः ॥ १५ ॥
सरस्वतीतटे मुक्तं कटिसूत्रं ततस्तया ।
जले क्रीडितुमारब्धा, सखीभिः परिवारिता ॥ १६ ॥
तच्चातिलोहितं दृष्ट्वा, कटिसूत्रं नभस्थिता ।
शकुनी मांसलोभेन, जग्राह च बुभुक्षिता ॥ १७ ॥
चरणाभ्यां गृहीत्वाऽसौ, गता तद्विजने वने ।
यत्रासौ मुनिशार्दूलो, बिल्वपत्राण्युपाहरत् ॥ १८ ॥
तेन सा वृक्षशाखायां, मुक्ता यत्र करण्डिका ।
विलीना तत्र शकुनी, मांसं भक्षितुमादरात् ॥ १९ ॥
[3]चंच्वोः समाहतं मुक्तं, तया तु कटिसूत्रकम् ।
मांसं तु [4]बटिनं(कठिनं)मत्वा, मुमोचातिबुभुक्षिता ॥ २० ॥
करण्डिकायां पतितं, तया मुक्तमवेदितम् ।
ऋषिर्गृहित्वा प्रययौ, क्षुत्तृषार्तः स्वमाश्रमम् ॥ २१ ॥
ततस्तु तद्विचिन्वन्तस्तस्य राज्ञः पदातयः ।
पर्यटन्ति वने तस्मिन्नितश्चेतश्च सर्वतः ॥ २२ ॥
एकेनासौ ततो दृष्ट, ऋषिः पृष्टश्च न त्वया ।

१ अचोरोऽपि P २ चोरत्वं P ३ चंच्वाः P ४ कठिनं P

रशना पतिता [1]दृष्टा, ब्रूहि सत्यमतोऽन्यथा ॥ २३ ॥
चौरस्त्वं भविता विप्रस्तस्मात्सर्वं यथास्थितम् ।
वक्तव्यं च तथा दृष्टं, न ते दुःखकरं स्मृतम् ॥ २४ ॥
न दृष्टं तत्कटिसूत्रं, तं प्रोवाच मुनिर्यदा ।
तदाऽनेन नृशंसेन, गृहीता सा करण्डिका ॥ २५ ॥
उपगृह्य तदन्तस्थं, [2]तावुभौ(तमृर्षि) कटिसूत्रकम् ।
धर्मवर्मा नृपो यत्र, [3]ततस्थौ प्रस्थितौ स्वयम् ॥ २६ ॥
आवेदितं ततस्तस्य, राज्ञस्तेन पदातिना ।
हारहर्ता स चौरोऽयं, समानीतो मया बलात् ॥ २७ ॥
एवमुक्तो नृपः प्राह, पुरस्थं तं पदातिनम् ।
कुतः प्राप्तस्त्वया दस्युः, किंरूपो ब्रूहि मे भृशम् ॥ २८ ॥

पदातिरुवाच—

ऋषिरूपधरो राजन्, पृष्ठमासीन्मया पुरा ।
न गृहीता न दृष्टा मे, रशनाह्व यदाद्विजः ॥ २९ ॥
स्कन्धात्करण्डिका चास्य, गृहीता सा यदा मया ।
तदा तत्रैव सा दृष्टा, रशनाऽतीवगोपिता ॥ ३० ॥
आगच्छता मया चोक्तं, द्विज किं वै त्वया कृतम् ।
सद्भिर्विगर्हितं कर्म, [4]द्रष्टाद्रष्टपिनोहितं (द्रष्टुं दृष्टेऽपि
नो हितम्) ॥ ३१ ॥
आहोक्ते कृतमस्माभिः, प्रागुपात्तफलोदयात् ।
कर्मणा तस्करश्चाहं, वाच्योऽस्मीति न चान्यथा ॥ ३२ ॥
एवं ब्रूवन् महाराज, मयानीतस्तवान्तिकम् ।
ऋषिर्वा तस्करो [5]वाऽपि, अत्र दैवं हि कारणम् ॥ ३३ ॥
धर्मवर्मा विदित्वैवं, तत्स्वरूपं पदातितः ।
धर्मस्थानमयं दस्युर्नीयतां तं समादिशत् ॥ ३४ ॥

---

१ दृष्ट्वा P २ तावुभौ P ३ ततस्तौ P ४ दृष्टेऽपि P ५ चा

धर्मस्थानगतः पृष्टो, धर्मस्थैर्द्विजसत्तमैः ।
को भवान् तस्करश्चाहं, तैः पृष्टस्तान् तथाऽब्रवीत् ॥ ३५ ॥
विभक्तो नास्ति ते दण्डः, [1]शरीरस्थो यतो [2]यतिः ।
अतोऽन्यत्र व्रजाशु त्वं, निर्वास्यस्त्वं तमब्रवीत् ॥ ३६ ॥
तस्करोऽहं यतिर्नास्ति, राज्ञो दोषावहेऽपि मे ।
तस्माद्वधोऽपि मे युक्तो, नृपादेशेन धर्मपाः ॥ ३७ ॥
एवमुक्तेऽथ तैरुक्तः, स्वयमेव प्रकाशय ।
वधोपायं वधिष्यामो, येन [3]त्वं तस्करोत्तम ॥ ३८ ॥
आहैवमुक्ते शूलेन, भिद्यतां मे तनुर्भृशम् ।
दंशवेधविपाकोत्थं, नान्यथा व्रजति क्षयम् ॥ ३९ ॥
[4]ते सर्वे तं पुनः प्राहुर्धर्मस्थानस्थिता द्विजाः ।
दंशवेधविपाकोत्थं, कथमेतत् स्मृतं त्वया ॥ ४० ॥

ऋषिरुवाच—

आख्यामि भवतामेतदन्यजन्मान्तरार्जितम् ।
फलं [5]चौरत्वसम्प्राप्तं, शूलभेदादनन्तरम् ॥ ४१ ॥
आरोपितः शूलिकायां, ततोऽसौ राजशासनात् ।
शूलपातोऽपि तैस्तत्र, न मृतोऽसौ द्विजोत्तमः ॥ ४२ ॥
ततोऽसावाह तान् सर्वान्, ब्राह्मणान् सनृपाँस्तदा ।
श्रूयतां येन दोषेण, प्राप्तोऽहं शूलिकां दृढाम् ॥ ४३ ॥
कृतं जन्मान्तरेऽन्यस्मिन्, बालभावे तु यन्मया ।
दंशवेधात्मकं कर्म, तस्येयं सफला क्रिया ॥ ४४ ॥
अन्यथा केन कार्येण, न ज्ञाता मे करण्डिका ।
प्रविष्टा रशना राज्या महती दैवनोदनात् ॥ ४५ ॥
यस्मान्मया यथा विद्धः, कण्टकेन दुरात्मना ।
दंशदुःखमनुप्राप्तस्तथा प्राप्स्याम्यहं ध्रुवम् ॥ ४६ ॥

---

१ शरीरस्थायते २ युति ३ त्वां ४ तेन ५ चौरत्त्वयं प्राप्तो

[1]सप्तरात्राद्विमुच्येऽहं, शूलाभिन्नोऽपि दुःसहात् ।
तस्मात् पुराकृतात् पापात्, दंशवेधात्सुदारुणात् ॥ ४७ ॥

श्रीमार्कण्डेय उवाच—

सप्ताहं शूलिकाभिन्नः, स्थितस्तत्र महामुनिः ।
तदाष्टमेऽह्नि शनकैर्नीतो निर्लेपतामिति ॥ ४८ ॥
एवं कर्मफलावाप्तिरत्र भुक्ता प्रदर्शिता ।
जन्मान्तरार्जितस्यापि, क्षयो [2]भोगान्न चान्यथा ॥ ४९ ॥
सुखदुःखयोः संयोगः, संवित्तिर्वेदनं स्मृतम् ।
धर्माधर्मविपाकोत्थं, नराणां द्विविधं फलम् ॥ ५० ॥
शूलवेधान्महादुःखात्, स्वास्थ्यं प्राप्य मुनिः पुरा ।
पुनस्तपः समारब्धं, कर्तुं तत्राप्यसौ तदा ॥ ५१ ॥
सरस्वतीतटे तस्मिन्, माण्डव्याख्योपलक्षिते ।
ये वसन्ति नरास्तत्र, तेषां शास्ता न धर्मराट् ॥ ५२ ॥
यत्तत्र क्रियते कर्म, [3]स्वल्पमप्यशुभं विना ।
अनिच्छतोऽपि तत्पुंसः, स्वर्गावाप्तिकरं सदा ॥ ५३ ॥
सारस्वतं जलं पुण्यं, शिवक्षेत्रे पुनः स्थितम् ।
पुण्यातिशयसंयुक्तं, तथा च मुनिसेवितम् ॥ ५४ ॥
रुद्रावतारमार्गेऽस्मिन्, एवं सर्वत्र तत्स्मृतम् ।
[4] त्रितयं फलदं पुंसां, स्वर्गावाप्तेस्तु कारणम् ॥ ५५ ॥

॥ इति माण्डव्येश्वरमाहात्म्यम्[5] ॥

---

१ सप्तरात्रान् P  २ भोगान्नवान्यथा P  ३ स्वल्पमल्प P
४ एतच्चिह्नमध्यगः पाठः P आदर्शे नास्ति
५ अत्र निम्नावतारितद्विचत्वारिंशच्छ्लोकाः जालेश्वरमाहात्म्यसूचकाः M आदर्शे अधिका दृश्यन्ते ते चेमे—

शृणु वत्स प्रवक्ष्यामि, तीर्थ माहात्म्यमुत्तमम् ।
सेवितं ऋषिगन्धर्वैः, पापिनामपि दुर्लभम् ॥१॥

**पिलुपर्णिकसंज्ञं तु, तीर्थमन्यत्पुरः स्थितम् ।**
**सरस्वतीतीरगतं, ऋषिणा सेवितं महत् ॥ ५६ ॥**

---

जालेश्वरस्य संज्ञं तु, कोटी हत्याविनाशनम् ।
कामिनां कामदं नित्यं, अभिलाषस्य पूरकम् ॥२॥
यस्य स्मरणमात्रेण सर्वपापैः प्रमुच्यते ।
दानयज्ञैस्तपोयज्ञैर्बहुधा दक्षिणां तथा ॥३॥
शिवरात्रिदिने तत्र, जागरणं कुरुते नरः ।
स्वर्गलोकमतिक्रम्य, शिवलोकं स गच्छति ॥४॥
पीलुपर्णस्य संस्थानं, सेवितं तपमिच्छया ।
सरस्वतीतटे रम्ये, ह्रदो पूर्वपरापरैः ॥५॥
नानाविधैश्च कुसुमैर्विचित्रविहगोपमैः ।
तापसानां सदा रम्यं, तत्तीर्थं मुनिसेवितम् ॥६॥

सुमतिरुवाच—

अथाहं श्रोतुमिच्छामि, विस्तरेण वदस्व मे ।
जालेश्वरमितिख्यातं, तीर्थं कुत्र समुद्भवम् ॥ ७ ॥
एतत्कथय देवर्षे, दयां कृत्वा ममोपरि ।
यः श्रुत्वा सर्वपापेभ्यो, मुच्यते नात्र संशयः ॥ ८ ॥

मार्कण्डेय उवाच—

शृणुष्व मेऽभितो भूत्वा, कथां पापप्रणाशिनीम् ।
यच्छ्रुत्वा सर्वपापेभ्यो, मुच्यते नात्र संशयः ॥ ९ ॥
कृते जागत्यविज्ञेयं, त्रेतायां च जगद्गुरुम् ।
द्वापरे जाप्यनामानं, कलौ जालेश्वरं स्मृतम् ॥ १० ॥
पिलुपर्णेति विख्यात, ऋषिः परमधार्मिकः ।
तापसो तापसानां वै, तत्त्वज्ञः पारदर्शनः ॥ ११ ॥
सरस्वतीतीरगतं ऋषिणा सेवितं महत् ।
पिलुपर्णीकतीर्थं तु, संज्ञं तत्र समुत्थितम् ॥ १२ ॥

जीर्णानि पीलुपत्राणि, सोऽश्नंस्तत्रस्थितः सदा ।
पीलुपर्णिति तस्येदं, नाम तद्गुणगौरवात् ॥ ५७ ॥
सेवितं तत्र तद्यस्मात्, [1]सरस्वत्यां पयोऽमलम् ।
ऋषिणा तेन [2]तीर्थं तु, पुंसां धर्मफलप्रदम् ॥ ५८ ॥

---

अम्बुभक्षं वायुभक्ष, जीर्णपत्राशनस्तथा ।
पिलुपर्णानि सोऽश्नाति, पक्वानि तत्र संस्थितम् ॥ १३ ॥
पिलुपर्णेति तस्येदं, नाम तद्गुणगौरवात् ।
सेवितं तत्र यस्माद्वै, सरस्वत्यां पयोऽमलम् ॥ १४ ॥
ऋषिणा तेन तत्तीर्थं, पुंसां धर्मफलप्रदम् ।
जालेश्वरस्तु तत्रैव, स्वयं देवो व्यवस्थितः ॥ १५ ॥
यस्य दर्शनमात्रेण, सर्वपापक्षयो भवेत् ।
तत्र पुण्यजपो होमश्राद्धदानादिका क्रिया ॥ १६ ॥
जालेश्वरं समासाद्य, तदनन्तफलं स्मृतम् ।
जालमध्ये स्थितं लिङ्गं, पुरा युगसहस्रकम् ॥ १७ ॥
सेवितं सिद्धगन्धर्वैस्तपकोटिफलप्रदम् ।
तस्मिन् ह्रदे नरः स्नात्वा, शिवभक्तिरतो भवेत् ॥ १८ ॥
लभते ईप्सितान् कामान्, प्रान्ते शिवपुरं व्रजेत् ।
कैलासादधिका प्रीतिर्जायते शिवदर्शनात् ॥ १९ ॥
उमया सहितो रुद्रः, क्रीडते च अहर्निशम् ।
कामधेन्वार्चितं लिङ्गं, क्षालितं पयराशिभिः ॥ २० ॥
निर्मलं जायते तत्र, मानसं लिङ्गदर्शनात् ।
सरस्वतीतटे स्नात्वा, वन्दितं कुण्डजं जलम् ॥ २१ ॥
भवपाशविनिर्मुक्ता, जायन्ते जन्तवो भुवि ।
तत्र दानजपो होम स्वाध्याय देवतार्चनम् ॥ २२ ॥

---

१ सरस्वत्याः P २ तत्तीर्थं P

आलेश्वरस्तु तत्रैव, स्वयं देवो व्यवस्थितः ।
यस्य दर्शनमात्रेण, सर्वपापक्षयो भवेत् ॥ ५९ ॥

---

मार्कण्डेय उवाच

श्रूयतां सर्वधर्मज्ञ, आख्यानमिदमुत्तमम् ।
आलेश्वरस्य माहात्म्यं, सर्वदुष्कृतनाशनम् ॥ २३ ॥
अत्र ते कथयिष्यामि, इतिहासं पुरातनम् ।
अस्मिन् वने पुरा वत्स, व्याधो जीववधे रतः ॥ २४ ॥
कदाचिद्दैवयोगेन, प्राचीतीरमुपागतः ।
जनाकुलं ततो दृष्ट्वा, किमेतदिति चिन्तयन् ॥ २५ ॥
कश्चित्स्नाति सरित्तीरे, कश्चिद्याति गृहं प्रति ।
स्नात्वा कश्चिद् हरेः पूजां, कश्चिध्दयानरतो नरः ॥ २६ ॥
एतस्मिन्नेव काले तु, ब्राह्मणः स्नातुमागतः ।
वृद्धं विप्रवरं दृष्ट्वा, व्याधस्तत्र उपागतः ॥
प्रणिपत्य तमाहेदं, किमिदं दृश्यते तटे ॥ २७ ॥

ब्राह्मण उवाच

गच्छ गच्छ इतः पापी, तव स्पर्शो भविष्यति ।
अस्माकं स्नानवेलायां, न कथाऽवसरोऽधुना ॥ २८ ॥

व्याध उवाच

विप्रवर महाप्राज्ञ, शृणु मे परमं वचः ।
अहं पापी खलो व्याधः, मृगहिंसारतः सदा ॥ २९ ॥
तथापि च सतां नित्यमनुग्राह्यो भवादृशाम् ।
साधुः परोपकारार्थं, नित्यं दयाहिते रतः ॥ ३० ॥

ब्राह्मणोवाच—

माघा चतुर्दशी अद्य, सोमवारसमन्विता ।
तस्मात्स्नानार्थं मनुजाः, प्राचीतीरमुपागताः ॥ ३१ ॥

तत्र पूजा जपो होमः, श्राद्धदानादिकाः क्रियाः ।
जालेश्वरं समासाद्य, तदनन्तफलं स्मृतम् ॥ ६० ॥
॥ इति जालेश्वरमाहात्म्यम् ॥

---

व्याधोवाच—

कृपां कुरु द्विजाधीश, मयि पापेऽपि किङ्करे ।
उपायं वद मे दिव्यं, येन पापक्षयो भवेत् ॥ ३२ ॥
इति वाचां दयां श्रुत्वा, करुणां दिनवत्सलः ।
स विप्रः स्नापयामास, व्याधं प्राचीजले शुभे ॥ ३३ ॥
उवाच मधुरं वाक्यं, आगच्छ व्याध मे गृहम् ।
व्याधोऽपि तद्गृहे गत्वा, दृष्ट्वा स्नात्वा शुभे जले ॥ ३४ ॥
रात्रौ जागरणं कृत्वा, गतपापोऽभवत्तदा ।
विप्राज्ञया गृहं गत्वा, पालयित्वा व्रतं ततः ॥ ३५ ॥
भुक्त्वा भोगानशेषेण, प्रान्ते हरपुरं गतः ।
एतत्तीर्थप्रभावेण, शिवलिङ्गस्य दर्शनात् ॥ ३६ ॥
व्याधः प्राप्तो महाराज्यं, स कलिङ्गाधिपोऽभवत् ।
अन्ते कैलासवासं च, प्राप्तो विप्रस्य सङ्गमात् ॥ ३७ ॥

मार्कण्डेय उवाच—

एतत्ते कथितं विप्र, तीर्थमाहात्म्यमुत्तमम् ।
सरस्वत्यास्तटे रम्ये, हृदं दुष्कृतनाशनम् ॥ ३८ ॥
अस्मिन् तीर्थे नरः स्नात्वा, सवत्सां गां पयस्विनीम् ।
ददाति द्विजवर्याय, लभते वाञ्छितं फलम् ॥ ३९ ॥
अमा वै सोमसंयुक्ता, अथवा शिवयोगतः ।
द्वादश्यां वाऽथ भूतायां, शिवपूजारतो भवेत् ॥ ४० ॥
कुलकोटिं समुद्धृत्य, चान्त्ये शिवपुरं व्रजेत् ।
एतत् पुण्यं पवित्रं च, धन्यं दुःस्वप्ननाशनम् ॥ ४१ ॥
यः शृणोति नरो भक्त्या, गङ्गास्नानफलं भवेत् ॥ ४२ ॥

[1]पिलुपर्णिकतीर्थांत्सा, प्रणष्टा ब्रह्मणः सुता ।
द्वारकायां च गोवत्से, पुनर्दर्शनमागता ॥ ६१ ॥
सुमतिः परिपप्रच्छ, मार्कण्डेयं तदा गुरुम् ।
कस्मात् पिलुवनाद्देवी, प्रणष्टा सा सरस्वती ॥ ६२ ॥
द्वारकायां च गोवत्से, प्रत्यक्षा ब्रह्मणः सुता ।
एतावदन्तरं यावत् ,त्यज्य(त्यक्तं)कस्मा[2]द्धरातलम् ॥ ६३ ॥
देवी रसातलेनैव, गृहीत्वा वाडवं गता ।
नाल्पं हि कारणं मन्ये, श्रोतुमिच्छामि तत्त्वतः ॥ ६४ ॥
[3]सुमतेर्वचनं श्रुत्वा. मार्कण्डेयो महामुनिः ।
प्रहस्य सुचिरं ध्यात्वा, कथयामास तत्त्वतः ॥ ६५ ॥

---

પિલુપર્ણિક તીર્થમાં નષ્ટ થયેલ, બ્રહ્મસુતા સરસ્વતીએ ગોવત્સ અને દ્વારકા, એ તીર્થોમાં પુનર્દર્શન આપ્યાં. ૬૧

ત્યારે સુમતિએ માર્કંડેય ગુરૂને પ્રશ્ન પૂછ્યો કે તે સરસ્વતી શા કારણથી પિલુવનમાં નાશ પામ્યાં? ૬૨

વળી દ્વારકા અને ગોવત્સ તીર્થોમાં તે બ્રહ્મસુતા પુનઃ પ્રત્યક્ષ કેવી રીતે થયાં, ત્યાં સુધીનો પ્રદેશ તથા ધરાતલનો તેમને શા કારણથી ત્યાગ કર્યો? ૬૩

કારણ કે દેવી સરસ્વતીને વાડવાગ્નિ ગ્રહણ કરી, રસાતળમાં જવાનું સામાન્ય કારણ હોય તેમ મારૂં માનવું નથી. એટલે ખાસ હેતુપુરઃસર તેમને રસાતળમાં જવું પડયું હતું તેનું રહસ્ય સાંભળવા ઇચ્છું છું. ૬૪

સુમતિનાં વચન સાંભળી મહામુનિ માર્કંડેય, હાસ્ય કરી, ધ્યાન ધરીને વિસ્તાર વડે કહેવા લાગ્યા. ૬૫

---

१ पिलुपर्णिकाद् P २ धरातलं M ३ नास्त्ययं श्लोकः P आदर्शे

मार्कण्डेय उवाच—

सम्यक्पृष्टं त्वया तात रहस्यं यन्मया श्रुतम् ।
सनत्कुमाराद्ब्रह्मर्षेर्भविष्यत्कथयामि ते ॥ ६६ ॥

इममर्थं पुरा पृष्टो, नारदेन महात्मना ।
यथा स कथयामास, तद्यथा कथयामि ते ॥ ६७ ॥

एतत्पुरा पुण्यतमं, स्थानं सिद्धिप्रदं नृणाम् ।
यस्मान्मुक्तं सरस्वत्याः, पुनः सम्भावितं शृणु ॥ ६८ ॥

ये तु क्रोधरसा नाम, विष्णुनाऽभिहताः पुरा ।
चापोत्कटा इति ख्याताः, सम्भूताः धरणीतले ॥ ६९ ॥

सम्प्राप्यैतन्महास्थानमर्बुदारण्यसंस्थिता ।
न्यवसन् रौद्रकर्माणो, मद्यपा निरपत्रपाः ॥ ७० ॥

---

માર્કંડેય બોલ્યા—હે વત્સ તમોયે ઉત્તમ પ્રશ્ન પૂછયો છે. આ રહસ્ય સનત્કુમારોએ બ્રહ્મર્ષિને કહ્યું હતું. તે ભવિષ્યકથન જે મેં સાંભળ્યું છે, તે હું તમને કહું છું. ૬૬

પૂર્વે મહાત્મા નારદે આ પ્રશ્ન સનત્કુમારોને પૂછયો હતો અને તેમને જે પ્રમાણે કહ્યું હતું તે જ પ્રમાણે હું તમને સંભળાવું છું. ૬૭

આ સ્થાન પૂર્વ કાળમાં પુણ્યતમ અને મનુષ્યોને સિદ્ધિપ્રદ હતું, તે સ્થળનો સરસ્વતીએ શા કારણથી ત્યાગ કર્યો, અને ફરીથી કેવી રીતે પ્રાદુર્ભાવ પામ્યાં તે સાંભળો. ૬૮

પૂર્વે ક્રોધરસા નામના જે દાનવોનો વિષ્ણુએ નાશ કર્યો હતો, તેઓ ચાપત્કટો(ચાવડાઓ)થી પ્રસિદ્ધ થઇ ધરાતલ ઉપર ઉત્પન્ન થયા. ૬૯

તેઓ અર્બુદારણ્યમાં રહેતા હતા, ત્યાંથી આ મહાસ્થાનને પ્રાપ્ત કરી (-માં આવી) અહીં નિવાસ કર્યો, અને મદ્યપાન તથા લજ્જા વગરનાં નિંદ્ય કર્મો (અધમકાર્યો) કરવા લાગ્યા. ૭૦

तेषां स्पर्शभयाद्देवी, तीर्थैः सह सरस्वती ॥
अदृश्या तत्र सञ्जाता, दैवैर्ऋषिगणैः सह ॥ ७१ ॥
जालेश्वरात्तु सुमते, गोवत्सं यावदेव च ।
पुण्यस्थानमिदं तैस्तु, नाशितं पापबुद्धिभिः ॥ ७२ ॥
एतत्ते कथितं ब्रह्मन्, यथा नष्टा सरस्वती ।
सिद्धराजस्य माहात्म्यात्, पुनर्दृश्या भविष्यति ॥ ७३ ॥

सुमतिरुवाच—

भगवन् श्रोतुमिच्छामि, वीस्तरात्कथयस्व मे ।
कोऽसौ स सिद्धनृपतिः, कस्मिन् वंशे भविष्यति ॥ ७४ ॥
कस्मादेष समुत्पन्नो, यत्प्रभावात्सरस्वती ।
तीर्थैः सह महाभागा, पुनर्दृश्या भविष्यति ॥ ७५ ॥
कथं स सिद्धराजोऽभूत्कथं तुष्टा सरस्वती ।
कस्तस्य शास्ता नृपतेश्चरितं तत्र कीदृशम् ॥ ७६ ॥

---

તે દુરાચારીઓના સ્પર્શભયથી સરસ્વતી દેવી તીર્થો અને દેવઋષિગણો સહ (અહીંથી) અદ્રશ્ય થયાં. ૭૧

હે સુમતે! જાલેશ્વરથી ગોવત્સ સુધીનો આ પુણ્યપ્રદેશ પાપીઓની પાપબુદ્ધિથી (ધર્મતીર્થ તરીકે) નાશ પામ્યો. ૭૨

હે સુમતિ! આ પ્રમાણે સરસ્વતી કેવી રીતે નાશ પામ્યાં તે મેં તમને કહ્યું. આ સરસ્વતી સિદ્ધરાજના પ્રભાવે કરી, પુનઃ પ્રાદુર્ભાવ પામશે. ૭૩

સુમતિ બોલ્યા: હે ભગવન્! આ સિદ્ધનૃપતિ કોણ? અને કયા વંશમાં થયો? તે બધું વિસ્તારથી કહો. હું સાંભળવા ઇચ્છું છું. ૭૪

તે શા કારણથી પૃથ્વિ ઉપર ઉત્પન્ન થયો, જેના પ્રભાવથી મહાભાગા સરસ્વતી તીર્થોસહ ફરીથી પ્રાદુર્ભૂત થયાં? ૭૫

તે કેવી રીતે થયો, તેના ઉપર સરસ્વતી શાથી પ્રસન્ન થયાં, તેનો ઉપદેષ્ટા કોણ હતો, તેનું ચરિત્ર કેવું હતું, પૃથ્વિ ઉપર સિદ્ધિ

कियन्मात्रं हि तत्पुण्यं, स्थानं सिद्धिप्रदं भुवि ।
कानि तीर्थानि तत्रैव, कथयस्व महामुने ॥ ७७ ॥

मार्कण्डेय उवाच—

साधु पृष्टं त्वया वत्स, सुमते कथयामि ते ।
चरितं सिद्धराजस्य, सर्वसिद्धिप्रदायकम् ॥ ७८ ॥
सर्वविघ्नप्रशमनं, सर्वान्तकनिवारणम् ।
यच्छ्रुत्वा मानवो भक्त्या, सद्यः पापात्प्रमुच्यते ॥ ७९ ॥
धर्मे प्रक्षीयमाणे तु, प्रवृत्ते तु कलौ युगे ।
पुनर्यथावतीर्णोऽसौ, विष्णुस्तत्कथयामि ते ॥ ८० ॥
सोमवंशसमुद्भूत[1]श्चौलवान्वयसम्भवः ।
कर्णदेवोऽभवद्राजा, साक्षाद्धर्म इवापरः ॥ ८१ ॥
तस्य भार्याऽभवत्साध्वी, जयकेशीसुता प्रिया ।
सा तु तं जनयामास, देवकीव पुरा हरिम् ॥ ८२ ॥

---

આપનાર તે પુણ્યસ્થાનની પરિસીમા ક્યાં સુધી આવેલી છે, તેમ જ તે પ્રદેશમાં ક્યાં ક્યાં ધર્મતીર્થો રહેલાં છે, હે મુનિશ્વર! તે બધું મને કહી સંભળાવો. ૭૬–૭૭

માર્કંડેય બોલ્યા—વત્સ સુમતિ! તેં ઉત્તમ પ્રશ્ન પૂછ્યો છે, જે હું તને કહીશ. સિદ્ધરાજનું ચરિત્ર સર્વસિદ્ધિ આપવાવાળું, સર્વ વિઘ્નોને શમન કરનારૂં અને કાલભયનો નાશ કરનારૂં છે. જે મનુષ્યો ભક્તિવડે તેનું શ્રવણ કરે છે તે પાપોથી તુરત જ મુક્ત થાય છે. ૭૮–૭૯

પ્રવર્તમાન કલિયુગમાં ધર્મનો હ્રાસ થતાં ભગવાન્ વિષ્ણુ ફરીથી કેવી રીતે પ્રકટ થયાં તે હું તમને કહું છું. ૮૦

ચંદ્રવંશમાં સાક્ષાત્ ધર્મના પુનરાવતારતુલ્ય ચૌલવંશોત્પન્ન કર્ણદેવ રાજા ઉત્પન્ન થયો. ૮૧

તેની સ્ત્રી જયકેશીની પુત્રી પરમ સાધ્વી હતી. પૂર્વે દેવકીએ જેમ શ્રીકૃષ્ણભગવાનને જન્મ આપ્યો હતો, તેમ તેણે સિદ્ધરાજને જન્મ આપ્યો. ૮૨

---

१ चौलक्यान्वय P

जातमात्रे ततस्तस्मिन्, वागुवाचाऽशरीरिणी ।
शृण्वतां सर्वभूतानां, तदद्भूतमिवाऽभवत् ॥ ८४ ॥

यस्माज्जेष्यति सर्वे हि, सिंहवद्देवदेहभृत् ।
जयसिंहदेव इति, नाम लोके भविष्यति ॥ ८४ ॥

नष्टं नष्टं पुनर्धर्मं, यः समुद्धरते सदा ।
स एष मानुषे लोके, सम्भूतः पुरुषोत्तमः ॥ ८५ ॥

समाराध्य महादेवं, त्रिपुरान्तकरं हरम् ।
सिद्धराज इति ख्यातश्चक्रवर्ती भविष्यति ॥ ८६ ॥

एष दृष्ट्वा स्वयं भक्त्या, रुद्रं रुद्रमहालये ।
महालयेन संयुक्तं, प्राचीने तु करिष्यति ॥ ८७ ॥

एष बर्बरकं जित्वा, भूतेशं भयदं नृणाम् ।
महालयस्य पुरतः, स्ववशे स्थापयिष्यति ॥ ८८ ॥

---

તેનો જન્મ થતાં જ ત્યાં અદ્ભુત રીતે અશરીરિણી (આકાશ-દૈવી–વાણી) વાચા સર્વ મનુષ્યો સાંભળે એવી થઇ. ૮૩

આ મહાપુરૂષ સર્વ કોઇને જિતી લેનાર સિંહસમાન **જયસિંહદેવ** નામથી સકલ સંસારમાં પ્રસિદ્ધ થશે. ૮૪

પુરૂષશ્રેષ્ઠ આ બાળક મનુષ્યલોકમાં પુરૂષોત્તમ (વિષ્ણુ ભગવાન–પુરૂષોમાં ઉત્તમ) સ્વરૂપે ઉત્પન્ન થઇ, નષ્ટ થયેલા ધર્મનો ઉદ્ધાર કરશે. ૮૫

તે ત્રિપુરાન્તક (ત્રિપુર દૈત્યને મારનાર) મહાદેવનું આરાધન કરી ચક્રવર્તિ થશે અને **સિદ્ધરાજ** તરીકે પ્રસિદ્ધિ પામશે. ૮૬

ભગવાન્ મહારૂદ્રનાં ભક્તિવડે રૂદ્રમહાલયમાં દર્શન કર્યા પછી પ્રાચીન મહાલય તીર્થ સહ તેનો (**રૂદ્રમહાલય પ્રાસાદ** બંધાવી) ઉદ્ધાર કરશે. ૮૭

તે ભૂતેશ (ભૂતોના ઈશ) અને મનુષ્યોને ભય આપનાર **બર્બરકને** જિતી મહાલયની સમીપમાં પોતાનો વશવર્તિ બનાવશે. ૮૮

एष उखरं समुद्धृत्य, अन्धकूपान्महामनाः ।
नागलोके स्वयं गत्वा, नागान् सञ्जीवयिष्यति ॥ ८९ ॥
एष बुद्धिमतां श्रेष्ठः, सर्वज्ञानवतां निधिः ।
भविष्यति महाराजः, सर्वधर्मप्रवर्तकः ॥ ९० ॥
स्मशानमूखरं क्षेत्रं, पीठं तु वनमेव च ।
कलौ युगे प्रणष्टानि, पुनः प्रत्याहरिष्यति ॥ ९१ ॥
विरामे तस्य वाक्यस्य, पुष्पवृष्टिः पपात यत् ।
देवदुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणाः ॥ ९२ ॥
ततः स वृद्धिमगमत्, शुक्लपक्षे शशिर्यथा ।
स तु [1]बाल्यात्प्रभृत्येव, सर्वैर्गुणगणैर्वृतः ॥ ९३ ॥
ततो भूपपतिर्दृष्ट्वा, पुत्रमात्मगुणाधिकम् ।
अभिषिच्य स्वराज्ये तं, शिवलोकं जगाम सः ॥ ९४ ॥

---

અંધકૂપમાંથી ઉશર (ઉસ) લાવી આપી, તે મહામના નાગલોકમાં જાતે જઈ, નાગોને જીવનદાન આપશે. ૮૯

તે બુદ્ધિમાનોમાં શ્રેષ્ઠ, સર્વ જ્ઞાનનો ભંડાર અને સર્વધર્મપ્રવર્તક મહારાજા થશે. ૯૦

સ્મશાન, ઉખર, ક્ષેત્ર, પીઠ, અને વન એ પાંચ મહાસ્થાનો કલિયુગમાં જે નાશ પામ્યાં છે તેનો તે પુનરૂદ્ધાર કરશે. ૯૧

આ અશરીરિણી વાચા બંધ થતાં જ પુષ્પવૃષ્ટિ થવા લાગી, દેવદુંદુભિઓ વાગવા માંડયાં અને અપ્સરાઓ નાચ કરવા લાગી. ૯૨

શુક્લ પક્ષમાં જેમ ચંદ્ર(ની કલાઓ) વધે છે તેમ તે દિવસે દિવસે મોટો થવા લાગ્યો. તેનામાં બાલ્યવયથી જ સર્વગુણો ભર્યા હતા. ૯૩.

પછી તે રાજાએ (કર્ણે) પુત્રને પોતાના કરતાં પણ અધિક ગુણવાળો જોઇ રાજગાદી ઉપર અભિષિચ્ય કર્યો અને તેણે શિવપુર કૈલાસ તરફ પ્રયાણ આદર્યું. ૯૪

---

१ बाल्यप्रभृत्येव P

तेजसा तस्य ते सर्वे, [1]ये तु धर्मस्य बाधकाः ।
क्षणान्नष्टास्ततो ब्रह्मन्, दीपा वातहता इव ॥ ९५ ॥

रहस्यानि तु रुद्रस्य, यानि स्थानानि भूतले ।
समाराध्य जगन्नाथं, प्रकाशानि चकार सः ॥ ९६ ॥

अवन्तिमादितः कृत्वा, जित्वा सर्वां वसुन्धराम् ।
ब्राह्मणेभ्यो ददौ राजा, शिवध्यानपरायणः ॥ ९७ ॥

सर्वे वर्णाः स्वधर्मस्थाः, नाकालमरणं नृणाम् ।
न च व्याधिभयं घोरं, तस्मिन् शासति मेदिनीम् ॥ ९८ ॥

कामवर्षी च पर्जन्यः, सर्वसस्यप्रदा मही ।
सर्वा द्रोणदुघा गावः, प्रभावात्तस्य भूपतेः ॥ ९९ ॥

---

તેના (સિદ્ધરાજના) તેજપ્રભાવ વડે જેમ વાયુથી દિવા ઠરી જાય તેમ ધર્મબાધકો-ધર્મધ્વંસકો (દુષ્ટો) ક્ષણમાં નાશ પામ્યા. ૯૫

પૃથ્વિને વિષે જે રૂદ્રસ્થાનો ગુપ્ત હતાં તે વિષ્ણુ ભગવાનનું આરાધન કરી તેણે પ્રકાશમાં મૂક્યાં. (જાહેર કર્યાં) ૯૬

અવંતિથી આરંભી સર્વ પૃથ્વિને જિતી લઈ તે શિવધ્યાનપરાયણ રાજાએ બ્રાહ્મણોને (પૃથ્વિનાં) દાનો આપ્યાં. ૯૭

તે રાજાના શાસનકાળમાં સર્વ વર્ણો સ્વધર્મથી રહેતાં હતાં, મનુષ્યોમાં અકાલ મરણો થતાં નહતાં, અને ભયંકર વ્યાધિઓનો ભય ન હતો. ૯૮

તે ભૂપતિના પ્રભાવ વડે વરસાદ ઇચ્છા પ્રમાણે થતો, (માગ્યા મેઘ વરસતા) પૃથ્વિ દરેક પ્રકારનાં વિપુલ ધાન્ય આપતી, અને ગાયો પુષ્કળ દૂધ આપતી હતી. ૯૯

---

१ ध्येतु P

न चौराग्निभयं तत्र, न विषव्यालकं तथा ।
क्षुत्पिपासाभयं नास्ति, सिद्धराजे प्रशासति ॥ १०० ॥
एवं पालयतस्तस्य, प्रजाः पुत्रानिवौरसान् ।
स्वपुरस्थस्य राजर्षेर्यद्वृत्तं कथयामि ते ॥ १०१ ॥
एकदा पार्थिवेन्द्रोऽसौ, निशि सुप्तोत्थितः सुखम् ।
संस्मार ससरस्तत्र, जलहीनं स्वके पुरे ॥ १०२ ॥
यत्सरो नगराभ्यासे, उत्तरस्यां दिशि स्थितम् ।
कृतं दुर्लभराजेन, जलपूर्णं कथं भवेत् ॥ १०३ ॥
एवं चिन्तयते यावत् सुमते सिद्धराट् ततः ।
योगनिद्रां गतस्तावत्, शिवध्यानपरायणः ॥ १०४ ॥
एतस्मिन्नन्तरे ब्रह्मन्, भरद्वाजो महामुनिः ।
अस्य वंशस्य कर्ता यो, भृगुवंशविवर्धनः ॥ १०५ ॥

---

સિદ્ધરાજના શાસનકાળમાં ચોર, અગ્નિ, ઝેર, અને ઝેરી પ્રાણિઓ(સર્પ, વ્યાઘ્ર, સિંહ વગેરે)નો ભય ન હતો. તેમ જ કોઇને ક્ષુધા કે તૃષાની ચિંતા ન હતી. અર્થાત્ સર્વ મનુષ્યો સાધનસંપન્ન હતાં. ૧૦૦

આ પ્રમાણે તે રાજર્ષિ પોતાની પ્રજાને ઔરસ પુત્રની માફક પાળતો હતો, જે તેવામાં એક અદ્ભુત બનાવ બન્યો તે હું કહું છું. ૧૦૧

એક વખત તે પાર્થિવેન્દ્ર, રાત્રે સુખપૂર્વક નિદ્રા લઇ જાગ્રત થતાં તેને પોતાના નગર પાસેનું જલહીન સરોવર સાંભરી આવ્યું. ૧૦૨

આ સરોવર નગરની નિકટમાં ઉત્તર દિશાએ આવેલું હતું, જે દુર્લભરાજે બંધાવ્યું હોઇ ને તે જલપૂર્ણ કેવી રીતે થાય (તેનો વિચાર કરવા લાગ્યો). ૧૦૩

હે સુમતે! આ પ્રમાણે ચિંતવન કરતાં સિદ્ધરાજ શિવધ્યાન-પરાયણ બની, યોગનિદ્રામાં પડી ગયો. ૧૦૪

જેના નામ ઉપરથી તે કુળનું નામ ભારદ્વાજ કહેવાય છે, તેમ જ

यस्य नाम्ना कुलं चेदं भारद्वाजमिति श्रुतम् ।
तेजसा यशसा चैव, ख्यातं सर्वेषु राजसु ॥ १०६ ॥
ज्ञात्वा स चिन्तितं तस्य, स्वयं तत्र समाययौ ।
तुष्ट्यर्थं सिद्धराजस्य, देवकार्यार्थसिद्धये ॥ १०७ ॥
योगनिद्रागतं दृष्ट्वा, शिवध्यानपरं नृपम् ।
प्रोवाच प्रहसन् ब्रह्मन्, भारद्वाजः शुभं वचः ॥ १०८ ॥
साधु ते चिन्तितं वत्स, ज्ञात्वा दिव्येन चक्षुषा ।
तत्सिद्ध्यति यथा सर्वमुपदेक्ष्यामि तत्त्वतः ॥ १०९ ॥
ततः स नृपतिर्दृष्ट्वा, मत्वा तं [1]कुलदेवतम् ।
यथार्हं पूजयामास, योगनिद्रां गतोऽपि सन् ॥ ११० ॥
अद्य मे सफलं राज्यं, अद्य मे सफलं श्रुतम् ।
अद्य मे सफलाः कामाः यत्त्वं दृष्टोऽसि भार्गव ॥ १११ ॥

---

સર્વે રાજાઓમાં પોતાના યશ અને તેજપ્રભાવ વડે પ્રસિદ્ધ છે, તે ભારદ્વાજ કુળના કર્તા અને ભૃગુવંશની વૃદ્ધિ કરનારા ભરદ્વાજ મુનિ તેટલામાં ( ત્યાં આવ્યા ). ૧૦૫–૧૦૬

સિદ્ધરાજની પ્રસન્નતા માટે, અને દેવકાર્યોની સિદ્ધિને અર્થે સિદ્ધરાજને ચિંતવન કરતો જાણી ને પોતે ત્યાં આવ્યા. ૧૦૭

શિવધ્યાનપરાયણ, સિદ્ધરાજને યોગનિદ્રામાં લીન થયેલા જોઈ ભરદ્વાજ મુનિ હાસ્ય કરી, ઉત્તમ વાણી વડે બોલ્યા. ૧૦૮

હે સાધુ પુરૂષ ! તારૂં ચિંતિત કાર્ય મેં દિવ્ય ચક્ષુ વડે જાણ્યું છે. તેની સિદ્ધિ માટે યોગ્ય ઉપાય બતાવીશ. ૧૦૯

પછી તે રાજાએ યોગનિદ્રામાં છતાં પણ તેમને જોતાં જ પોતાના કુલપતિ તરીકે તેમનું વિનીતભાવ વડે પૂજન કર્યું. ૧૧૦

ત્યારબાદ સ્તુતિ કરતાં સિદ્ધરાજ કહેવા લાગ્યા કે આપનાં દર્શનવડે કરીને મારૂં રાજ્ય, શ્રુત અને સર્વ કામનાઓ સિદ્ધ થયાં છે. ૧૧૧

---

૧ कुलदैवतं

स तथा पूजितस्तेन, विधिना तपसां निधिः ।
अभिनन्द्य महाराजं, भरद्वाजो ब्रवीदिदम् ॥ ११२ ॥
यत्त्वया चिन्तितं वत्स, कथं स्याज्जलपूरितम् ।
सरोवरमिदं ख्यातं, तत्रोपायं ब्रवीमि ते ॥ ११३ ॥
सारस्वतमिदं क्षेत्रं, पुण्यमासीत्पुराऽनघम् ।
पापस्पर्शभयाद्देव्या, परित्यक्तं कलौ युगे ॥ ११४ ॥
तामाराधय तस्मात्त्वं, वरदां ब्रह्मणः सुताम् ।
सरस्वतीं पुण्यतमां, परमानन्ददायिनीम् ॥ ११५ ॥
सरस्वत्युत्तरे कूले, स्मशानान्ते स्वयं स्थितः ।
महादेवः पुरा कल्पे, त्वया सिद्धेश तोषितः ॥ ११६ ॥
सिद्धेश्वर इति ख्यातस्तस्मात्सिद्धिप्रदो भुवि ।
यदि त्यक्तं सरस्वत्याः न मुक्तं शङ्करेण तत् ॥ ११७ ॥

---

આ પ્રમાણે વિધિવડે પૂજન કરવાથી તપરૂપી ભંડારવાળા ભરદ્વાજમુનિ, મહારાજને (સિદ્ધરાજને) અભિનંદન આપી બોલ્યા. ૧૧૨

હે વત્સ! જે પ્રસિદ્ધ સરોવરને જલપૂર્ણ કરવાનો તું વિચાર કરે છે, તેનો ઉપાય હું તને કહું છું. ૧૧૩

પૂર્વે આ સારસ્વતક્ષેત્ર ( સરસ્વતીને લઈ ) પવિત્ર ગણાતું હતું. પરંતુ પાપસ્પર્શના ભયને લીધે કલિયુગમાં દેવીએ તેનો ત્યાગ કર્યો છે. ૧૧૪

તે બ્રહ્મસુતા સરસ્વતીનું તમે આરાધન કરો, જે મહાપુણ્ય અને પરમાનંદ આપવાવાળી છે. ૧૧૫

પૂર્વકાળમાં તેં સિદ્ધેશને પ્રસન્ન કર્યા છે, તે મહાદેવ સ્મશાનના અંતમાં સરસ્વતીના ઉત્તરકાંઠા ઉપર આવેલા છે. ૧૧૬

સિદ્ધોથી સેવાયેલા તે સિદ્ધિ આપવાવાળા હોઈ સિદ્ધેશ્વરથી પ્રસિદ્ધ છે. સરસ્વતીએ તે સ્થાનનો ત્યાગ કર્યા છતાં પણ શંકરે તે સ્થાનને છોડયું નથી. ૧૧૭

तत्र सिद्धेश्वरं देवं, भक्त्या सम्पूज्य तं विभुम् ।
उत्तराभिमुखः स्थित्वा, गृह्णन् ब्रह्मसनातनम् ॥ ११८ ॥
प्राणायामपरो भूत्वा, संस्थाप्य प्रणवं हृदि ।
[1]स्मर सरस्वतीं देवीं, [2]सा ते सिद्धिं प्रदास्यति ॥ ११९ ॥
एवमुक्त्वा भरद्वाजः, परिष्वज्य महीपतिम् ।
शीर्षं चाघ्राय सस्नेहं, ययावाश्रममात्मनः ॥ १२० ॥
गते तस्मिन् मुनौ विप्रे, योगनिद्रां विहाय सः ।
चिन्तयामास सिद्धेशो, विस्मयाविष्टमानसः ॥ १२१ ॥
किं नु स्वप्नो मया दृष्टः, प्रत्यक्षमथवा पुनः ।
अथवा न भवेत् स्वप्नो, नाहं निद्रावशो यतः ॥ १२२ ॥
एवं स निश्चयं कृत्वा, प્रभाते विमले नृपः ।
कथयामास तत्सर्वं, गुरूणां सुहृदां तथा ॥ १२३ ॥

---

ત્યાં અગાડી જઈ, સિદ્ધેશ્વર ભગવાનનું ભક્તિ વડે પૂજન કરી, ઉત્તરાભિમુખ એસી, સનાતન બ્રહ્મ શિવાત્મક બની, સરસ્વતીનું ધ્યાન કર.

વળી પ્રાણાયામમાં નિરત રહી, હૃદયમાં પ્રણવને સ્થાપન કરી, દેવી સરસ્વતીનું સ્મરણ કરજે, જેથી તે દેવી સિદ્ધિ આપશે. ૧૧૯

આ પ્રમાણે કહી ભરદ્વાજ મુનિએ તે રાજેન્દ્રને આલિંગન આપ્યું અને સ્નેહપૂર્વક તેનો મૂર્ધ્નિપ્રદેશ સુંઘી, પોતાના આશ્રમ પ્રતિ ચાલ્યા ગયા. ૧૨૦

ભરદ્વાજ મુનિના ગયા પછી યોગનિદ્રાનો ત્યાગ કરી, સિદ્ધરાજ વિસ્મય પામી, ચિંતા કરવા લાગ્યો. ૧૨૧

મેં શું સ્વપ્નમાં આ બધું જોયું કે પ્રત્યક્ષ દેખ્યું? હું નિદ્રામાં છું કે જાગ્રત છું? એવો વિચાર કરતાં કરતાં તેણે નિશ્ચય કર્યો કે, ના હું સ્વપ્નમાં કે નિદ્રામાં નહતો, પણ મેં જે જોયું તે મારી સંપૂર્ણ શુદ્ધિમાં બન્યું છે. આમ સ્હમજી, નિર્મળ પ્રભાતમાં તેણે સ્વપ્નની આ વાત ગુરૂ અને મિત્રોને કહી. ૧૨૨–૧૨૩

---

૧ स्मरन्  ૨ सा तत्सिद्धिं

ततः स तैरनुज्ञातः पुण्येऽह्नि विधिपूर्वकम् ।
पुरोधसा च संयुक्तो, गौरेयं स तदा ययौ ॥ १२४ ॥
सारस्वतं महत्स्थानं, पुरा दृष्ट्वा मनोरमम् ।
गौरेयस्याऽभवत्प्रीतिस्तस्मात्तत्र स्वयं स्थितः ॥ १२५ ॥
नगरस्योत्तरे भागे, उखरस्य तु मध्यमः ।
सिद्धेश्वराद्दक्षिणतो, लोकानां सर्वसिद्धिदः ॥ १२६ ॥
स तं प्रणम्य विघ्नेशं, सम्पूज्य विधिवत्स्वयम् ।
निर्विघ्नां सिद्धिमन्विच्छन्, देवं सिद्धेश्वरं ययौ ॥ १२७ ॥
स दृष्ट्वा परमेशानं, महादेवं जगद्गुरुम् ।
प्रणम्य परया भक्त्या, सम्पूज्य विधिवत्ततः ॥ १२८ ॥
ब्रह्मन् स प्रयतो भूत्वा, स्मृत्वा [1]तच्छोभनं गुरोः ।
उत्तराभिमुखः स्थित्वा, बद्ध्वा पद्मासनं दृढम् ॥ १२९ ॥

પછી સત્પુરુષોથી અનુજ્ઞાત થયેલ સિદ્ધરાજ વિધિપૂર્વક પુરોહિત સાથે ગૌરેય( ગણપતિ )ના મહાસ્થાને ગયો. ૧૨૪

પૂર્વે આ મનોરમ સારસ્વતસ્થાન ઉપર પ્રીતિ થવાથી ગણપતિએ અહીં નિવાસ કર્યો છે. ૧૨૫

સમસ્ત જનોને સિદ્ધિ આપનાર આ ગૌરેયનું મંદિર, નગરના ઉત્તર ભાગે, ઉખર ( ઉષર ) ભૂમિની મધ્યમાં, અને સિદ્ધેશ્વરથી દક્ષિણે આવેલું છે. ૧૨૬

ત્યાં તેણે વિઘ્નેશનું પૂજન વિધિવત્ કર્યું, અને પોતાનું કાર્ય નિર્વિઘ્ને સિદ્ધ થાય એમ ઇચ્છી, તે ( સિદ્ધરાજ ) સિદ્ધેશ્વર ગયો. ૧૨૭

ત્યાં પરમેશાન, જગદ્ગુરુ, મહાદેવજીને જોઈ, તેણે વિધિપૂર્વક અને પૂર્ણ ભક્તિ વડે તેમનું પૂજન કર્યું. પછી પોતાના પ્રયત્નમાં તત્પર થઈ, શોભા આપવાવાળું ગુરુનું વાક્ય સ્મરણ કરી, ઉત્તરાભિમુખે

[1] शासनं

सन्निरुध्येन्द्रियग्रामं, प्राणं हृदि निधाय च ।
संस्मरन् प्रणवं मन्त्रं, सुमते ध्यानमास्थितः ॥ १३० ॥
एवं प्रध्यायतस्तस्य, तृतीयेऽह्नि सरस्वती ।
दर्शयामास चात्मानं, वीणापुस्तकधारिणी ॥ १३१ ॥
शुक्लाम्बरधरा नारी, शुक्लमाल्यानुलेपना ।
द्योतयन्ती जगत्सर्वं, राजानं वरदाऽब्रवीत् ॥ १३२ ॥
परितुष्टास्मि भद्रं ते, वरं वरय सुव्रत ।
ध्यानं मुक्त्वा महाराज, ब्रूहि यत्ते मनोगतम् ॥ १३३ ॥
देव्यास्तद्वचनं श्रुत्वा, मुक्त्वा ध्यानं महीपतिः ।
पूजयामास तां भक्त्या, वरदां ब्रह्मणः सुताम् ॥ १३४ ॥
प्रोवाच प्रणतो भक्त्या, यदि तुष्टाऽसि मेऽनघे ।
एतत्स्थानं न मोक्तव्यं, त्वया देवि कदाचन ॥ १३५ ॥

---

૬૯ પદ્માસન વાળી, ઇંદ્રીઓનો નિરોધ કરી, પ્રાણને હૃદયમાં સ્થાપી, હે સુમતે! પ્રણવના સ્મરણ સાથે તેણે ધ્યાન ધર્યું. ૧૨૮–૧૨૯–૧૩૦

આ પ્રમાણે ધ્યાન ધરતાં ત્રીજે દિવસે જેણે હાથમાં વીણા-પુસ્તક ધારણ કરેલાં છે. અને શ્વેત વસ્ત્રો પરિધાન કરી, તેવાં જ ચંદન-પુષ્પોથી અલંકૃત, સરસ્વતી જાણે જગતને પ્રકાશ કરતાં હોય તે પ્રમાણે રાજાને દર્શન આપી, વરદાન આપતાં બોલ્યાં. ૧૩૧–૧૩૨

હે સુવ્રત! તારૂં ભદ્ર ( કલ્યાણ ) થાઓ. હું તારા ઉપર પ્રસન્ન છું. જે જોઈએ તે વરદાન માગ. રાજન્! ધ્યાનમુક્ત થઈ, મનોગત જે વાંચ્છના હોય તે જણાવ. ૧૩૩

દેવીનાં વચન સાંભળી, ધ્યાનમુક્ત થયલો, રાજા, વર આપવાવાળી બ્રહ્મતનયા સરસ્વતીનું ભક્તિ વડે સવિધિ પૂજન કરી બોલ્યો. ૧૩૪

હે અનઘે (પવિત્ર)! આપ જો પ્રસન્ન થયાં હો તો તમારે નિરંતર આ સ્થાનમાં નિવાસ કરવો અને તેનો કોઈ વખત ત્યાગ કરવો નહીં. ૧૩૫

पञ्चक्रोशमिदं स्थानं, यत्पुरा त्यक्तवत्यसि ।
तीर्थैस्तु सहिता सर्वे नित्यं सन्निहिता भव ॥ १३६ ॥
स्मशानमुखरं क्षेत्रं, पीठं तु वनमेव च ।
पञ्चैतानि यथा ह्यत्र, सम्भवन्ति तथा कुरु ॥ १३७ ॥
यदेतन्नगराभ्यासे, जलहीनं सरो मम ।
तत्पूरयस्व पुण्येन, पवित्रेण स्ववारिणा ॥ १३८ ॥
दिवि भुव्यन्तरिक्षे च, यानि तीर्थानि सन्ति वै ।
यथा सरसि मे नित्यं निवसन्ति तथा कुरु ॥ १३९ ॥
एतच्छ्रुत्वा वचस्तस्य, प्रसन्ना ब्रह्मणः सुता ।
प्रोवाच सिद्धराजेन्द्र ! सर्वमेतद्भविष्यति ॥ १४० ॥
या सा जलमयी मूर्तिर्वहते पावनी मम ।
प्लावयन्ती स्मशानं सा, तडागे ते च[1]वत्स्यति ॥ १४१ ॥

પાંચ કોશ પર્યંતનું આ સ્થાન જેનો પહેલાં આપે ત્યાગ કર્યો હતો તેને તીર્થો સહિત આપના પુનિત પ્રવાહથી અલંકૃત કરો. ૧૩૬

સ્મશાન, ઉખર, ક્ષેત્ર, પીઠ અને વન, એ પાંચે મહાસ્થાનોને પૂર્વની માફક આપના નિવાસથી સુશોભિત કરો. ૧૩૭

મારા નગરની સમીપમાં જલ વિનાનું જે સરોવર છે તેને આપના પવિત્ર વારિથી પરિપૂર્ણ કરો. ૧૩૮

પૃથ્વિ ઉપર, અંતરિક્ષમાં, અને પાતાળમાં જે ગુપ્તાગુપ્ત તીર્થો છે તે બધાં મારા સરોવર ઉપર અને તેની આજુબાજુમાં નિવાસ કરો. ૧૩૯

એવાં તેનાં વચન સાંભળી, સરસ્વતી પ્રત્યક્ષ થઈ બોલ્યાં: **હે સિદ્ધરાજ** ! તથાસ્તુ, સર્વ એ પ્રમાણે થશે. ૧૪૦

જે મારી જલમયી મૂર્તિ સ્મશાનને પવિત્ર કરતી, પ્રવાહ રૂપે વહે છે તે તારા સરોવરમાં નિવાસ કરશે. ૧૪૧

---

1 विवत्स्यति

अहं त्वयीति [1]वत्स्यामि, शब्दब्रह्मस्वरूपिणी ।
अतिप्रीता महाराज, सर्वसिद्धिं प्रदास्यति ॥ १४२ ॥
इत्युक्त्वान्तर्दधे देवी, [2]ब्रह्मयोनिः सरस्वती ।
सुमतिः पृष्टवान् भूयो, मार्कण्डेयं गुरुं तदा ॥ १४३ ॥

सुमतिरुवाच—

अतिप्रभावो नृपतेर्भगवन् कीर्तितस्त्वया ।
अल्पायासेन मर्त्यस्य, सन्तुष्टा या सरस्वती ॥ १४४ ॥
प्रत्यक्षदर्शनं प्राप्ता, पूरयन्ती मनोरथान् ।
तीर्थैः सह महाभागा, विस्मयः सुमहानयम् ॥ १४५ ॥
कथं प्राप महासिद्धिरसाध्या या कलौ युगे ।
चरित्रं शृण्वतस्तस्य, अद्‌भुतं प्रतिभाति मे ॥ १४६ ॥

---

હે વત્સ ! હું શબ્દબ્રહ્મસ્વરૂપે અતિ પ્રસન્ન થઈ, ત્યાં નિવાસ કરી, સર્વ સિદ્ધિ આપીશ. ૧૪૨

એમ કહી, બ્રહ્મતનયા સરસ્વતી અંતર્ધ્યાન થયાં. તે વૃત્તાન્ત સાંભળી, સુમતિ માર્કંડેય ગુરૂને પૂછવા લાગ્યા. ૧૪૩

સુમતિ બોલ્યા—હે ભગવન્ ! આપે રાજાનો અનન્ય પ્રભાવ વર્ણવ્યો, પરંતુ અલ્પ પ્રયાસથી સરસ્વતીએ પ્રસન્ન થઈ, મનોરથોને પૂર્ણ કરી, પ્રત્યક્ષ દર્શન આપતાં તે મહાભાગાએ તીર્થોસહ ત્યાં નિવાસ કર્યો (વિદ્યાસ્વરૂપે-પ્રવાહરૂપે). આથી મને ઘણું જ આશ્ચર્ય લાગે છે. ૧૪૪–૧૪૫

કારણ કલિયુગમાં અસાધ્ય એવું દેવીનું પ્રત્યક્ષ દર્શન તે રાજાને કેવી રીતે પ્રાપ્ત થયું ? તે હકીકત સાંભળતાં જ નવાઈ પમાડે છે તેથી એ યથાર્થ કહો. ૧૪૬

---

१ अहं त्वयि निवत्स्यामि २ ब्रह्मयोनि

श्रीमार्कण्डेय उवाच—

मा ब्रह्मन् विस्मयं कार्षीर्देवगुह्यमिदं शृणु ।
जन्म [1]चैतस्य नृपतेर्विस्तरात्कथयामि ते ॥ १४७ ॥
दक्षः प्रजापतिर्योऽसौ, सत्या शप्तः पुरा कृतौ ।
पराभूतास्मि ते यस्मान्मृत्युलोके जनिष्यसि ॥ १४८ ॥
श्रुत्वा शापं [2]ततस्तस्माद्दक्षेणामितबुद्धिना ।
प्रसादिता तु सा देवी, शापस्यान्तं पुनर्ददौ ॥ १४९ ॥
यदा [3]त्वं मानुषे लोके, हरिं सञ्जनयिष्यसि ।
देवकार्यार्थसिद्ध्यर्थं, तदा शापाद्विमोक्ष्यसे ॥ १५० ॥
रूपलावण्यसंयुक्तः, सर्वै राजगुणैर्युतः ।
स कर्णदेवो नृपतिर्जातो वैवस्वतेऽन्तरे ॥ १५१ ॥
मालाविद्याधरपतिर्विजयो विश्रुतस्तु यः ।
तस्य कन्याद्वयं जज्ञे, वसतः सुरपर्वते ॥ १५२ ॥

માર્કંડેય બોલ્યા—હે બ્રહ્મન્! તેમાં આશ્ચર્ય જેવું કાંઈ નથી. દેવોથી પણ ગુહ્ય (અજ્ઞાત) તેનું જન્મવૃત્તાન્ત વિસ્તારપૂર્વક કહું છું તે સાંભળો. ૧૪૭

પહેલાં કૃતયુગની અંદર દક્ષ નામે પ્રજાપતિ હતા, તેમને સતીએ શાપ આપ્યો કે મારો અનાદર કરવાથી તમો મૃત્યુલોકમાં જન્મ ધારણ કરશો, ૧૪૮

આવો સતીનો શાપ સાંભળી, અમિત બુદ્ધિવાળા દક્ષે, શાપાનુગ્રહ માટે પ્રાર્થના કરતાં દેવીએ કહ્યું કે, જ્યારે મનુષ્યલોકમાં દેવકાર્ય માટે તમારે ત્યાં વિષ્ણુનો જન્મ થશે, ત્યારે તમો શાપમુક્ત થશો. ૧૪૯–૧૫૦

ત્યારપછી રૂપલાવણ્યસંપન્ન, રાજગુણોથી યુક્ત, દક્ષ પ્રજાપતિ વૈવસ્વત મન્વંતરમાં કર્ણદેવ રાજા થયા. ૧૫૧

દેવપર્વત (હિમાલય) ઉપર નિવાસ કરતા, માલાવિદ્યાધરપતિ વિજય નામના પ્રસિદ્ધ વિદ્યાધરને બે કન્યાઓ હતી. ૧૫૨

१ जन्म वै तस्य २ ततस्तस्य ३ यदा त्वां

[1]जातस्य(जातास्य)दुहिता तत्र, सुदेवा रूपसुन्दरी ।
पुरा कल्पे च साऽप्यासीद्भार्या दक्षप्रजापतेः ॥ १५३ ॥
सा तु बाल्यात्प्रभृत्येव, योगविद्यागुणान्विता ।
पुरुषद्वेषिणी जाता, गौर्याराधनतत्परा ॥ १५४ ॥
आराधयति सा देवीं, मनोवाक्कायचेष्टितैः ।
कैलासं सर्वदा गत्वा, प्रत्यक्षां हरवल्लभाम् ॥ १५५ ॥
एवं तु वर्तमाना सा, यौवनं समुपागता ।
दृष्ट्वा तु तां तथारूपां, माता तस्यास्तदा स्वयम् ॥ १५६ ॥
कन्याभावादतिक्रान्ता, सुदेवा ते सुता विभो ।
मालाविद्याधरपतिं, पतिं प्राह सुदुःखिता ॥ १५७ ॥
विवाहयितुमात्मानमस्माकं दुःखदायिनी ।
न सा वाञ्छति दैवाच्च, बोध्यमाना सती सदा ॥ १५८ ॥

---

તેમાં એકનું નામ સુદેવા હતું, જે રૂપસૌંદર્યમાં યુક્ત હોઈ પૂર્વ-કલ્પમાં દક્ષ પ્રજાપતિની સ્ત્રી હતી. ૧૫૩

તે કન્યા બાલ્યવયથી જ ગુણવાન્ અને યોગમાર્ગનું સેવન કરતી હોઈ, સ્વભાવથી જ પુરૂષદ્વેષિણિ હતી, જે નિત્ય ગૌરીનું આરાધન કરતી. ૧૫૪

તે હંમેશાં કૈલાસપર્વત ઉપર જઈ, મન, વાણી, અને કાયા વડે શિવપ્રિયાનું (ગૌરીનું) પ્રત્યક્ષ સેવન કરતી હતી. ૧૫૫

એમ કરતાં કરતાં તેણે બાલ્યાવસ્થામાંથી યૌવનમાં પ્રવેશ કર્યો. આવી ઉમ્મર લાયક, એટલે જેણે કન્યાભાવને અતિક્રાન્ત કર્યો છે તેવી (યૌવન પ્રાપ્ત થયેલી) સુદેવાને જોઈ, તેની માતા પોતાના પતિ માલાવિદ્યાધરપતિને દુઃખિત થઈ કહેવા લાગી. ૧૫૬–૧૫૭

સ્વામિન્ ! પરણાવવાને લાયક આ કન્યા આપણને દુઃખદાત્રી છે. છે. ગૌરીના કહેવા છતાં દૈવથી પ્રેરાયેલી તે પુરૂષને ઇચ્છતી નથી. ૧૫૮

---

१ जातास्य

ततः प्रोवाच तच्छ्रुत्वा, विद्याधरपतिः प्रियाम् ।
मा शोकं कुरु कल्याणि, कृतं सर्वत्र भुज्यते ॥ १५९ ॥
आराधयति यां देविं, सर्वभावेन ते सुता ।
सर्वकामप्रदा गौरी, प्राप्तकालं करिष्यति ॥ १६० ॥
द्वितीया ते सुता चेयं, देवकी वरवर्णिनी ।
रत्नचूडाय नागाय, प्रदत्ता कुलशालिने ॥ १६१ ॥

मार्कण्डेय उवाच—

तथापि दम्पती तौ तु, सुदेवां तां अहर्निशम् ।
चिन्तयन्तौ सुदुःखार्तौ, निर्दुःखं विन्दतः क्वचित्॥ १६२ ॥
सुदेवा सा तु सुमते, एकदा कामचारिणी ।
विमानवरमारूढा, मर्त्यलोकं जगाम ह ॥ १६३ ॥
यावत्पश्यति सा हृष्टा, जम्बूद्वीपं मनोरमम् ।
नानाश्चर्यसमाकीर्णं, नानाजनपदाकुलम् ॥ १६४ ॥

---

તે સાંભળી વિદ્યાધરપતિ બોલ્યા, હે કલ્યાણી ! એમાં શોચ કરવાનું કાંઈ કારણ નથી. કૃતકર્મનું ફળ સર્વ કોઈને ભોગવવું જ પડે છે. ૧૫૯

આ કન્યા જે દેવી(પાર્વતી)નું સર્વભાવથી નિત્ય પૂજન અને અર્ચન કરે છે તે જ સર્વ મનેપ્સિત કાર્યો કરવાવાળી ભગવતી યથાસમયે સર્વ કાર્યો કરશે. ૧૬૦

તેની બીજી દેવકી નામની સુંદર કન્યાને કુલશાલિ, રત્નચૂડ નામના નાગ સાથે પરણાવી. ૧૬૧

માર્કંડેય બોલ્યાઃ દેવકીને પરણાવ્યા પછી પણ તે દંપતિને સુદેવા માટે અહર્નિશ ચિંતા રહેવા લાગી. ૧૬૨

હે સુમતે ! એક વખત તે સુદેવા વિદ્યાધરિ ઇચ્છાનુસાર (સ્વેચ્છાથી) ગતિ કરનાર વિમાનમાં બેસી, ફરતી ફરતી મૃત્યુલોકમાં આવી. ૧૬૩

પૃથ્વી ઉપર આવતાં મનોહર જંબૂદ્વીપની અદ્ભુતતા, તેમ જ

नानाप्रभावैस्तीर्थैश्च, क्षेत्रैः पीठैः समन्वितम् ।
तावत्स्थानमिदं प्राप्ता, निधानं सर्वसम्पदाम् ॥ १६५ ॥
[1]सम्बभूव ततस्तस्या, निमित्तानि शुभानि च ।
दिव्यन्तरिक्षभौमानि, स्थानेऽस्मिन् सहसा द्विज ॥ १६६ ॥
वामं प्रस्पन्दते चक्षुर्वायुश्च [2]सुमुखो ववौ ।
मनसश्च परा प्रीतिः स्थानं बुद्धिरजायत ॥ १६७ ॥
यावन्निरीक्षते तच्च, विमानवरमास्थिता ।
शारदी रजनी तावत्, प्रवृत्ताऽऽनन्ददायिनी ॥ १६८ ॥
प्रासादोपरि पर्यङ्के, निशीथे वसुधाधिपः ।
दृष्टस्तया तु सहसा, निद्राममिलषन् सुखी ॥ १६९ ॥
तं दृष्ट्वा देवसंकाशं, नृपं पुरुषद्वेषिणी ।
कन्याऽपि सा सानुरागा, जाता कर्मवशेन तु ॥ १७० ॥

---

અનેક દેશો, નાના મોટા ક્ષેત્ર અને પીઠોથી સમન્વિત તીર્થો તથા અપૂર્વસંપત્તિસંપન્ન ભૂમિકા જોઇ તે પ્રસન્ન થઇ. ૧૬૪–૧૬૫

આ ભૂમિકામાં આવતાં જ તેને દિવિ (સ્વર્ગ) અંતરિક્ષ, અને પૃથ્વિમાંનાં શુભ નિમિત્તો (શુકનો) થવા લાગ્યાં. ૧૬૬

તેનું વામનેત્ર ફરકવા લાગ્યું, વાયુ ઉત્તમ પ્રકારે વાવા માંડ્યો, અને હૃદય આનંદમગ્ન બન્યું, જેથી આ સ્થાન ઉપર તેની પ્રીતિ થઇ. ૧૬૭

આ પ્રમાણે વિમાનમાં બેસી નિરીક્ષણ કરતાં કરતાં આનંદ આપનારી, શરદરાત્રી સંપૂર્ણ રીતે ખીલી હતી. ૧૬૮

તેવામાં ત્યાં પ્રાસાદ વિષે પલંગમાં સુખપૂર્વક શયન કરેલા વસુધાધિપ રાજા(કર્ણ)ને તેણે જોયો. ૧૬૯

દેવસમાન તે પુરૂષરાજને જોઇ, પુરૂષદ્વેષિણી સતી(વિદ્યાધર-કન્યા સુદેવા)ને અદષ્ટ કર્મયોગને લઇ તેના ઉપર પ્રીતિ થઇ. ૧૭૦

---

१ सम्बभूवुः   २ सुमुखो

ततः प्रबोधयामास, नृपतिं काममोहिता ।
प्रबोधितस्तया राजा, ददर्श पुरतः स्त्रियम् ॥ १७१ ॥
[1]कामार्ता तां विदित्वा तु, तप्तचामीकरप्रभाम् ।
नाभ्यनन्दत धर्मात्मा, परदाराभिशङ्कया ॥ १७२ ॥
मनोगतं तु सा भावं, बुद्ध्वा राज्ञो महात्मनः ।
[2]तस्मै निवेदयामास, स्वकुलं नाम कर्म च ॥ १७३ ॥
कन्याऽहं तव गम्याऽस्मि, जन्म मे सफलं कुरु ।
त्वया निराकृता नाथ, नाहं जीवितुमुत्सहे ॥ १७४ ॥
उपयेमे तु तां राजा, विधिना धर्मवत्सलः ।
गान्धर्वेण विवाहेन, तया रहसि याचितः ॥ १७५ ॥
तत्र सा रमयामास, राजानं प्रीतिमानसा ।
अवाप गर्भं तस्माच्च, अदितिः कश्यपाद्यथा ॥ १७६ ॥

---

તેણે રાજાને જગાડ્યો. જાગ્રત થતાં જ રાજાએ પોતાની આગળ રૂપસંપન્ન અને કામથી મોહિત થયેલી સ્ત્રીને જોઇ. પરંતુ તે ધર્માત્માએ પરદારા માની, તેનો ઇન્કાર કર્યો. ૧૭૧–૧૭૨

તે મહાનુભાવ નૃપતિના મનોગત ભાવોને જાણી, સુદેવાએ તેને પોતાનું કુળ, નામ અને કર્માદિક વૃત્તાન્ત નિવેદન કર્યાં અને વિનંતી કરતાં બોલી. ૧૭૩

હે નાથ ! હું કન્યા છું અને પતિભાવથી આપની પાસે આવી છું. તો મારો જન્મ સફળ કરો. આપ મારો અનાદર કરશો તો હું પ્રાણત્યાગ કરીશ. ૧૭૪

ધર્મવત્સલ તે મહારાજાએ તેનો વૃત્તાન્ત સાંભળી, વિધિયુક્ત ગાંધર્વ-વિવાહ કરી, પત્ની તરીકે તેનો સ્વીકાર કર્યો. ૧૭૫

પ્રસન્ન ચિત્તથી તે ઉભય દંપતિએ ગાર્હસ્થ્યધર્મનો સ્વીકાર કરતાં કશ્યપથી અદિતિની માફક સુદેવાને ગર્ભ રહ્યો. ૧૭૬

---

१ स कामार्ता २ तस्मिन्निवेदयामास

तस्मिन् गर्भेऽवतीर्णोऽसौ, देवकार्यार्थसिद्धये ।
दक्षं मोचयितुं शापात्स्वयं नारायणः प्रभुः ॥ १७७ ॥

तयोस्तु दैवसंयोगाद्वियोगः समजायत ।
तथारूपा तु सा देवी, जगाम स्वं निकेतनम् ॥ १७८ ॥

दर्शनेन पितुर्याति, लज्जमाना महासती ।
दधार गर्भं दुःखेन, सूर्यपावकवर्चसम् ॥ १७९ ॥

[1]प्रमदा सा यदा ब्रह्मन्, बभूव च सुदुःखिता ।
तदा गर्भं समहरद्दैवयोगबलेन तु ॥ १८० ॥

मर्त्यलोके तु तं नीत्वा, लोकानां हितकाम्यया ।
धर्मसंरक्षणार्थाय, असुराणां वधाय च ॥ १८१ ॥

तस्यैव कर्णनृपतेर्धर्मपत्नी वसुन्धरा ।
मयल्लदेवीति नाम्नाऽभूत्, तं सा तस्यै ददुः सुतम् ॥१८२॥

તે ગર્ભમાં દેવકાર્યોની સિદ્ધિ માટે, અને દક્ષને શાપથી મુક્ત કરવા, સ્વયં ભગવાન્ નારાયણે પ્રવેશ કર્યો. ૧૭૭

ત્યારપછી દૈવયોગે તે રાજાથી વિયોગ થતાં ગર્ભવતી સુદેવા પોતાના સ્થાને ગઇ. ૧૭૮

(યોગમાર્ગમાં પ્રવૃત્ત થયેલી, તેમ જ પુરૂષદ્વેષિણિ સુદેવાને ગર્ભ રહેતાં) પિતાજી દેખશે (જાણશે) એમ સમજી, લજ્જા પામતી, સૂર્ય અને અગ્નિ સમાન તેજસ્વી ગર્ભને દુઃખથી ધારણ કરતી હતી. ૧૭૯

હે સુમતિ ! જ્યારે તે અત્યંત દુઃખી થવા લાગી ત્યારે, દૈવયોગ-બળથી તે ગર્ભ લોકોના હિત માટે, અસુરોનો સંહાર કરવા, અને ધર્મસ્થાપન કરવા માટે પૃથ્વી ઉપર કર્ણદેવ રાજાની ધર્મપત્ની મયલ્લદેવી(મયણલ્લા)ને અર્પણ કર્યો. ૧૮૦-૮૧-૮૨

१ प्रमत्ता

एतत्ते कथितं ब्रह्मन्, रहस्यं यत्पुरातनम् ।
जन्म वै सिद्धनृपतेधर्मतः शासतः प्रजाः ॥ १८३ ॥
साहसे वर्तमानस्य, मतिस्तस्याऽशुभाऽभवत् ।
कालप्रभावान्मोहाच्च, हैतुकानां च सङ्गमात् ॥ १८४ ॥
धर्मात्प्रचलिता किञ्चिद्बुद्धिस्तस्य महीपतेः ।
नित्यं नैमित्तिकं काम्यं न यथावच्चकार सः ॥ १८५ ॥
यदा स सिद्धनृपतिर्देवा भीतास्तदा[1]ऽभवत् ।
इतिहासपुराणानि, धर्मशास्त्राणि यानि च ॥ १८६ ॥
संहिताः विविधाश्चैव आगमाँश्च पृथग्विधान् ।
केशवाख्यस्तदा तं तु, व्यासरूपी द्विजः स्वयम् ॥ १८७ ॥
स्मारयामास राजानमास्तिक्यमनुवर्णयन् ।
[2]स बोध्यमानः सहसा, त्यक्त्वा मोहं महामतिः ॥ १८८ ॥

---

આવી રીતે પુરાતન રહસ્યરૂપ **સિદ્ધરાજનો** જન્મવૃત્તાન્ત મેં તમને કહ્યો. આ **સિદ્ધનૃપતિ** ધર્મથી પ્રજાપાલન કરતો હતો. ૧૮૩

તે સાહસિક રાજાની બુદ્ધિ કાળયોગથી, નિરીશ્વરવાદિઓના સંગથી અને મોહથી ધર્મચ્યુત થઇ ત્યારે, ધર્મથી ચલિત બુદ્ધિવાળો તે રાજા નિત્ય, નૈમિત્તિક અને કામ્ય કર્મોથી પણ વિમુખ બન્યો. ૧૮૪-૧૮૫

જ્યારે તે રાજા ધર્મકર્મથી બહિર્મુખ થયો, ત્યારે દેવતાઓ ભયાકુલ બન્યા. (અર્થાત્ ધર્મકર્મનો લોપ થતાં દેવકાર્યોની સિદ્ધિ નહીં થાય તેવો દેવતાઓને ભય લાગ્યો.) આથી તેને પ્રબોધ કરવા ઇતિહાસ, પુરાણ, ધર્મશાસ્ત્ર, વેદ અને આગમોના જ્ઞાતા, વ્યાસસ્વરૂપ, **કેશવ** નામના બ્રાહ્મણે તેને વેદધર્મનું સ્મરણ કરાવીને પુનઃ આસ્તિક બનાવ્યો. ૧૮૬-૮૭-૮૮

---

१ स्तदाऽभवन्  २ सम्बोध्यमान

आत्मानं दैवतं मत्वा, महाधर्मरतोऽभवत् ।
नित्यनैमित्तिकादीनि, स यथावच्चकार ह ॥ १८९ ॥
पूजयामास विधिना, सर्वभावेन शङ्करम् ।
तिथिनक्षत्रयोगेषु, व्रतानि नियमैः सह ॥ १९० ॥
चकार विधिवत्सर्वं, स्वनाम्ना स्थानमेव च ।
गोभूहिरण्यदानानि, महादानानि यानि च ॥ १९१ ॥
प्रपारामतडागानि, सत्राणि विविधानि च ।
[1]यस्मिन् काले च तीर्थे च, दानं यद्विहितं [2]यथा ॥ १९२ ॥
ददौ स सिद्धनृपतिर्लोके धर्मं प्रदर्शयन् ।
यद्यदाचरति श्रेष्ठो, लोकस्तदनुवर्तते ॥
इष्टापूर्तं स्वयं तस्मात्, धर्मं राजा सदाऽकरोत् ॥ १९३ ॥

---

પુનઃ જ્ઞાનનિષ્ઠ બનેલ, તે રાજા નાસ્તિકવાદ અને આત્મમોહને ત્યજી, પોતે કોણ છે તે વિચારી, (અર્થાત્ પોતે વિષ્ણુસ્વરૂપ છે) સ્વધર્મપરાયણ બની, નિત્યનૈમિત્તિક કર્મો યથાવિધિ કરવા લાગ્યો. ૧૮૯

તિથિ, નક્ષત્ર, અને યોગોમાં, વ્રત નિયમો સાથે તે રાજા સર્વભાવથી (અનન્યભાવથી) ભગવાન્ શંકરનું પૂજન કરવા લાગ્યો. ૧૯૦

ગાયો, પૃથ્વી અને હિરણ્યાદિક મહાદાનો આપતા, પરબો, ઉપવનો અને મહાસરોવરો બંધાવતા, કાળ (ઉત્તમપર્વો) અને તીર્થોમાં વિધિપ્રમાણે વિવિધ સત્રો (યજ્ઞો) કરતા, તે મહારાજા (સિદ્ધરાજ) પોતાના નામને સિદ્ધ કરતા હતા. (અર્થાત્ સ્વનામધન્ય થયા.) ૧૯૨-૧૯૨

આ પુરૂષશ્રેષ્ઠ સિદ્ધનૃપતિ જનસમાજને ધર્મમાર્ગમાં પ્રેરતા ધર્મકાર્યો કરતા હતા. કારણ જનસમાજ શ્રેષ્ઠપુરૂષોને જ અનુસરે છે. વળી ઇષ્ટાપૂર્તાદિક અનેક ધર્મકાર્યો પણ તેણે કર્યાં હતાં. ૧૯૩

---

१ तस्मिन् २ तथा

सुमतिरुवाच—

असम्भाव्यमिदं मह्यं, भवता कीर्तितं मुने ।
द्विजमात्रेण यत्नेन, सिद्धराजः प्रबोधितः ॥ १९४ ॥
ज्ञानागमः कथं तस्य, सिद्धराजे च सौहृदम् ।
सञ्जातं सिद्धराजस्य, कथं तस्मिन् द्विजे सदा ॥ १९५ ॥

मार्कण्डेय उवाच—

कथयामि समासेन, जन्म तस्य द्विजन्मनः ।
यस्मिन् वंशे समुत्पन्नो, यदर्थे स महामुनिः ॥ १९६ ॥
ब्रह्मर्षिरर्जुनो नाम्ना, कश्यपान्वयसम्भवः ।
आसीत्सत्यपुरे स्थाने, ब्रह्मा विग्रहवानिव ॥ १९७ ॥
तस्मात्पुत्रः समुत्पन्नो, दामोदर इति स्मृतः ।
सत्यवादी ऋजुर्दान्तो, सदाचारो बहुश्रुतः ॥ १९८ ॥

---

સુમતિ બોલ્યા—હે મુનિશ્વર ! આપે જે કહ્યું તે મને અસંભાવ્ય લાગે છે. કારણ એક બ્રાહ્મણના ઉપદેશ માત્રથી રાજા પ્રબોધિત થયા, તો એવું અદ્ભુત જ્ઞાનસામર્થ્ય તે બ્રાહ્મણને કેવી રીતે થયું, તેમ જ **સિદ્ધરાજની** સાથે તેનો મિત્રતાનો હેતુ અને સ્નેહનું મુખ્ય કારણ કેમ બન્યું તે જણાવો. ૧૯૪-૯૫

માર્કંડેય બોલ્યા—તે બ્રાહ્મણનું જન્મવૃત્તાન્ત હું તમને સંક્ષેપમાં કહું છું. તે કયા વંશમાં, અને શા કારણથી ઉત્પન્ન થયા, તે **સાંભળો.** ૧૯૬

કશ્યપવંશમાં ઉત્પન્ન થયેલ બ્રહ્મર્ષિ **અર્જુન** નામે તપોમૂર્તિ **સત્યપુર(સાચોર)માં** રહેતા હતા. ૧૯૭

તેમનો પુત્ર **દામોદર** સત્યવાદી, ઉદાર, સદાચારી અને બહુશ્રુત હતો. ૧૯૮

भार्या तस्याऽभवत्साध्वी, सावित्री ब्रह्मणो यथा ।
नीतादेवीति विख्याता, केशवं साप्यजीजनत् ॥ १९९ ॥
कृष्णद्वैपायनो साक्षात्, सोऽवतीर्णो महीतले ।
निमित्ते सिद्धराजस्य, नियोगाद्ब्रह्मणो द्विजः ॥ २०० ॥
कारितः सिद्धराजेन, स्वपुरस्य तु मध्यतः ।
प्रासादमेरुरित्यस्ति, तस्य नाम्नोपलक्षितः ॥ २०१ ॥
हेमस्तम्भसमायुक्तो, मणिजालविभूषितः ।
दिव्यस्फटिकसोपानः, साक्षान्मेरुरिवापरः ॥ २०२ ॥
तस्मिन् वसति प्रीतात्मा, स्वयं देवः सदाशिवः ।
भक्त्या तु सिद्धराजस्य, कृष्णद्वैपायनस्तदा ॥ २०३ ॥
केशवो व्यासरूपेण, योऽवतीर्णो महीतले ।
सोऽद्यापि दृश्यते तत्र, ध्यायन् देवीं सरस्वतीम् ॥२०४॥
व्यासं पश्यति तत्रस्थं, देवं नत्वा सदाशिवम् ।
सुज्ञानं महदाप्नोति, परत्र च शुभां गतिम् ॥ २०५ ॥

---

તેમની સ્ત્રી **નીતાદેવી** ચતુર્મુખ(બ્રહ્મા)ની પત્ની સાવિત્રી જેવી સાધ્વી હતી, જેણે **કેશવને** જન્મ આપ્યો. ૧૯૯

**સિદ્ધરાજ**ના નિમિત્તે બ્રહ્માથી સાક્ષાત્ કૃષ્ણદ્વૈપાયને પૃથ્વી ઉપર કેશવસ્વરૂપે જન્મ લીધો. (અર્થાત્ દક્ષે કર્ણનો, વિષ્ણુએ સિદ્ધરાજનો અને કૃષ્ણદ્વૈપાયને કેશવનો, એમ ત્રણે દેવતાઓએ દેવકાર્યો માટે મૃત્યુલોકમાં જન્મ લીધો). ૨૦૦

રાજા **સિદ્ધરાજે** નગરની મધ્યમાં પોતાના નામથી **મેરૂપ્રાસાદ** (સિદ્ધરાજ મેરૂ) બંધાવ્યો હતો, ૨૦૧

તે પ્રાસાદ સોનાના સ્તંભોયુક્ત, મણિની જાળીઓથી સુશોભિત અને દિવ્ય સ્ફાટીકનાં પગથીયાંવાળો બીજા મેરૂ પર્વત જેવો (દેદીપ્યમાન) હતો. ૨૦૨

તેમાં પ્રસન્નચિત્તવાળા ભગવાન સદાશિવ બીરાજતા હતા. સિદ્ધરાજની ભક્તિવડે પૃથ્વી ઉપર પ્રકટ થયેલા કૃષ્ણદ્વૈપાયનસ્વરૂપ

यदावतरते विष्णुर्देवकार्येण केनचित् ।
तदा तस्य प्रबोधाय, व्यासोऽवतरते महीम् ॥ २०६ ॥
एतत्ते कथितं ब्रह्मन्, ज्ञानावाप्तेस्तु कारणम् ।
सौहार्दं तु यथाजातं, सिद्धराजस्य तस्य च ॥ २०७ ॥
इदं ते कथितं जन्म, सिद्धराजस्य विस्तरात् ।
समासात्केशवस्यापि, सर्वपापप्रणाशनम् ॥ २०८ ॥

श्रीमार्कण्डेय उवाच—

भरद्वाजस्ततः प्राप्तो, द्रष्टुं सिद्धेश्वरं स्थितम् ।
सिद्धयर्थं तं महाराजं, सरस्वत्या समागतम् ॥ २०९ ॥
आगतः सिद्धराजेन, पूजितो विधिवत्तदा ।
तस्थौ तत्रैव संहृष्टो, मत्वा तत्स्थानमुत्तमम् ॥ २१० ॥

---

કેશવ વ્યાસનો આ ભવ્ય પ્રાસાદમંદિરમાં નિવાસ હતો. આજે પણ ભગવતી સરસ્વતીનું ધ્યાન કરતા વ્યાસને જોઇ, તેમાં રહેલા ભગવાન્ સદાશિવને જે નમસ્કાર કરે છે તે ઉત્તમ જ્ઞાનને પ્રાપ્ત કરી, પરલોકમાં શુભ ગતિને પામે છે. ૨૦૩–૪–૫

જ્યારે જ્યારે દેવકાર્ય માટે વિષ્ણુ પ્રકટ થાય છે ત્યારે ત્યારે ધર્મપ્રબોધ માટે વ્યાસ ભગવાન્ પણ પૃથ્વી ઉપર પ્રાદુર્ભાવ પામે છે. ૨૦૬

હે બ્રહ્મન્! આ પ્રમાણે સિદ્ધરાજની સાથે (કૃષ્ણદ્વૈપાયનસ્વરૂપ) કેશવવ્યાસની મિત્રતાનું કારણ અને તેમને મેળવેલ સામર્થ્યનું વૃત્તાન્ત મેં તમને આ રહસ્યદ્વારા સમજાવ્યું. ૨૦૭

સિદ્ધરાજ અને કેશવ વ્યાસનું આ વિસ્તારપૂર્વક જન્મ વૃત્તાન્ત જે મેં સંભળાવ્યું તે સર્વ પાપોને નાશ કરનારૂં છે. ૨૦૮

માર્કંડેય બોલ્યા–ભરદ્વાજ મુનિ સિદ્ધેશ્વરના દર્શન માટે તેમ જ સરસ્વતી જેના ઉપર પ્રસન્ન છે તેવા મહારાજ સિદ્ધરાજની કાર્ય-સિદ્ધિ માટે ત્યાં પધાર્યા. ૨૦૯

તેમનું આગમન થતાં જ સિદ્ધરાજે તે મુનિવરનું વિધિવત્

तमुवाच भरद्वाजः, पुत्र दिष्ट्या सरस्वती ।
तीर्थैः सह महापुण्या, प्रत्यक्षा यत्त्वया कृता ॥ २११ ॥
अहो माहात्म्यमत्युग्रं, त्वया लोके प्रदर्शितम् ।
नष्टमेतन्महास्थानं, यत्त्वया पुनरुद्धृतम् ॥ २१२ ॥
यत्र सिद्धिस्त्वया! प्राप्ता, दृष्टा देवी सरस्वती ।
[1]सिद्धेश्वरं समासाद्य, स्थेयमत्र मयाऽपि हि ॥ २१३ ॥
सिद्धेश्वरसमीपे तु, सरस्वत्यां व्यवस्थितम् ।
तव नाम्नाऽत्र विख्यातं, तीर्थं लोके भविष्यति ॥ २१४ ॥
अस्मिन् तीर्थवरे स्नात्वा, सन्तर्प्य पितृदेवताः ।
सिद्धेश्वरं तु सम्पूज्य, सिद्धिं यास्यन्ति मानवाः ॥ २१५ ॥

---

પૂજન કર્યું. આથી (પૂજનથી) પ્રસન્ન થયેલા તે ઋષિ (ભરદ્વાજ) આ સ્થાનને સર્વોત્તમ માની, રાજા પ્રત્યે કહેવા લાગ્યા કે, હે પુત્ર! તેં અત્યંત ભક્તિભાવ વડે મહાપુણ્યા સરસ્વતીને તીર્થોસહ પ્રત્યક્ષ કર્યાં છે. (અર્થાત્ તેં ઘણું જ ઉત્તમ કાર્ય કર્યું છે, જેથી સરસ્વતીએ પ્રત્યક્ષ આવી તને દર્શન આપ્યાં.) ૨૧૦–૨૧૧

નષ્ટ પામેલાં આ મહાસ્થાનોનો તમોએ પુનરૂદ્ધાર કરી, તેનું ભવ્ય માહાત્મ્ય જગતમાં બતાવી આપ્યું છે. ૨૧૨

જ્યાં તમે સરસ્વતીનાં પ્રત્યક્ષ દર્શન કર્યાં, તેમ જ જે સ્થળે તમને સિદ્ધિ પ્રાપ્ત થઇ, આવા ઉત્તમ સિદ્ધેશ્વરના સ્થાનને પ્રાપ્ત કરી, હું પણ અહીં જ નિવાસ કરીશ. ૨૧૩

આ સિદ્ધેશ્વરની સમીપમાં સરસ્વતીના તટ ઉપર તારા નામથી જગવિખ્યાત તીર્થ થશે. ૨૧૪

આ તીર્થમાં સ્નાન કરી, દેવ, ઋષિ, પિતૃઓ, વગેરેને તર્પણાદિકથી તૃપ્ત કરી, સિદ્ધેશ્વરનું પૂજન કરનારા મનુષ્યો પરમ સિદ્ધિને પામે છે. ૨૧૫

---

१ सिद्धेश्वरे. P

पञ्चम्यां च सिते पक्षे, [1]येऽत्रागत्य सरस्वतीम् ।
[2]द्रक्षन्ति परया भक्त्या तेभ्यः सिद्धिं प्रदास्यति ॥ २१६ ॥
एवमुक्त्वा स सिद्धेशो, भरद्वाजस्तपोनिधिः ।
तत्रैव न्यवसत्प्रीतः, शिवध्यानपरायणः ॥ २१७ ॥
ततः स राजा सुप्रीतः, प्राप्य सर्वं मनोरथम् ।
सिद्धेश्वरप्रसादाच्च, सरस्वत्यास्तथैव च ॥ २१८ ॥
स्ववंशपावनार्थं च, सिद्धराजः सरस्वतीम् ।
तत्सरेऽथानयद्देवीं, गङ्गामीव भगीरथः ॥ २१९ ॥
एवं सा संस्थिता नित्यं, देवैर्ऋषिगणैः सह ।
पावयन्ति जगत्सर्वं, सिद्धराजसरोवरे ॥ २२० ॥
गङ्गा च यमुना चैव, मध्ये देवी सरस्वती ।
क्रीडन्ति तत्र सुप्रीताः, सरोमध्ये व्यवस्थिताः ॥ २२१ ॥

---

શુક્લ પક્ષની પંચમીને દિવસે જે કોઈ મનુષ્ય પરમ ભક્તિવડે અહીં સરસ્વતીનાં દર્શન કરશે તે મહાસિદ્ધિને પામશે. ૧૧૬

આ પ્રમાણે સિદ્ધરાજને કહી, તપના ભંડારરૂપ ભરદ્વાજ મુનિએ શિવધ્યાનપરાયણ બની, ત્યાં જ નિવાસ કર્યો. ૨૧૭

ત્યારપછી સરસ્વતી અને સિદ્ધેશ્વરના કૃપાપ્રસાદવડે સર્વ મનોરથોને સફળ થયેલા જાણી, તે નૃપતિ (સિદ્ધરાજ) ખૂબ પ્રસન્ન થયા. ૨૧૮

**પોતાના વંશને પાવન કરવા માટે જેમ ભગીરથ ગંગાને લાવ્યા હતા તેમ, સિદ્ધરાજ સરસ્વતીને આ મહાસરોવરમાં લાવ્યા. ૨૧૯**

આ પ્રમાણે દેવઋષિગણો સહ સિદ્ધરાજસરોવરમાં અહર્નિશ નિવાસ કરતાં સરસ્વતી સર્વ જગતને પવિત્ર કરતાં હતાં. ૨૨૦

જેમ ગંગા અને યમુનાની મધ્યમાં સરસ્વતી આનંદ પામે તેમ સિદ્ધરાજસરોવરમાં પ્રસન્નતાપૂર્વક ક્રીડા કલ્લોલ કરતાં હતાં. ૨૨૧

---

१ यत्रागत्य. P २ पश्यन्ति. P

स्मशानमूखरं क्षेत्रं, पिठं तु वनमेव च ।
प्रादुर्बभूव तत्सर्वं, प्रभावात्तस्य भूपतेः ॥ २२२ ॥

एतत्ते कथितं ब्रह्मन्, सिद्धराजेन यत्कृतम् ।
श्रुतं हि मानवैर्भक्त्या, सर्वपापं व्यपोहति ॥ २२३ ॥

सुमतिः परिपप्रच्छ, मार्कण्डेयं गुरुं तदा ।
माहात्म्यं [1]नृपतेस्तस्य, श्रोतुमिच्छामि विस्तरात् ॥ २२४ ॥

स्मशानस्य प्रभावं तु, प्रमाणं स्थानमेव च ।
ऊखरस्य च माहात्म्यं, क्षेत्रविस्तारमेव च ॥ २२५ ॥

[2]पीठस्य तु प्रभावं च, वनसंस्थानमेव च ।
प्रभावं च सरस्वत्यास्तीर्थानां विस्तराद्वद ॥ २२६ ॥

---

તે રાજાના પ્રભાવવડે સ્મશાન, ઊખર, ક્ષેત્ર, પીઠ અને વન વગેરે મહાસ્થાનો પાદુર્ભાવને પામ્યાં. ૨૨૨

હે બ્રહ્મન્ ! આ પ્રમાણે (સિદ્ધરાજનું ચરિત્ર) તેમણે કરેલાં સત્કાર્યો મેં તમને કહ્યાં, જે ભક્તિ ભાવવડે સાંભળવાથી મનુષ્યનાં સર્વ પાપોનો નાશ થાય છે. ૨૨૩

સુમતિ ગુરૂ માર્કંડેયને ફરીથી પ્રશ્ન પૂછવા લાગ્યા કે હે પ્રભો ! તે પુણ્યશ્લોક રાજાનું (સિદ્ધરાજનું) માહાત્મ્ય વિસ્તારથી સાંભળવા ઇચ્છું છું. ૨૨૪.

સ્મશાનનો પ્રભાવ અને તે સ્થાનનું પ્રમાણ (પરિસીમા), ઊખરનું માહાત્મ્ય અને તેનો ક્ષેત્રવિસ્તાર પીઠ અને વનસંસ્થાનનું માહાત્મ્ય (પ્રભાવ), સરસ્વતીનો પ્રભાવ અને ત્યાં રહેલાં તીર્થોનું વિસ્તારપૂર્વક વર્ણન સંભળાવો. ૨૨૫—૨૬

---

१ नृपतिस्तस्य. P २ नास्त्ययं श्लोकः. P आदर्शे P

श्रीमार्कण्डेय उवाच—

सुमते शृणु तत्त्वेन, यत्पृष्टोऽहं त्वयाऽधुना ।
यन्न कस्यचिदाख्यातं, रहस्यं कथयामि ते ॥ २२७ ॥
उज्जयिन्यां महाकालो, देवो रुद्रः सरस्तटे ।
तोषितः सिद्धराजेन, तुष्टस्तस्मै वरं ददौ ॥ २२८ ॥
स च वव्रे वरं राजा, प्रणिपत्य पुनः पुनः ।
निवासं कुरु देवेश तस्य मे सरसस्तटे ॥ २२९ ॥
स्मशानादीनि यान्यत्र, नित्यं सन्निहितानि ते ।
एतैः सह महत्स्थानं, तत्सम्भावय मे स्वयम् ॥ २३० ॥
तथेत्युक्त्वा च सिद्धेशं, ज्ञात्वा तं पुरुषोत्तमम् ।
निवासमकरोद्रुद्रस्तदा सिद्धसरस्तटे ॥ २३१ ॥
स्मशानादीनि सर्वाणि तीर्थानि सह दैवतैः ।
यथा यत्र निविष्टानि, सुमते कथयामि ते ॥ २३२ ॥

---

માર્કંડેય બોલ્યા–હે સુમતિ! તેં જે પ્રશ્ન પૂછયો તેનું રહસ્ય સ્પષ્ટ રીતે તને સંભળાવું છું, જે અત્યંત ગુપ્ત અને (હજુ સુધી) કોઇને પણ કહેવામાં આવ્યું નથી. ૨૨૭

ઉજ્જયની નગરીમાં નિવાસ કરતા **રૂદ્રમહાકાલને સિદ્ધરાજે** ભક્તિવડે પ્રસન્ન કર્યા. પ્રસન્ન થઈ રૂદ્રે વરદાન માગવા કહેતાં, રાજાએ પ્રણામપુરઃસર વારંવાર તે જ માગ્યું કે, આપ અહીં આવેલાં સ્મશાનાદિક તીર્થોના પ્રભાવસહ મારા **સિદ્ધસરોવર** પર નિવાસ કરો, અને આપના વડે તે સ્થાન સંભાવિત (મહાન તીર્થ) બનો. ૨૨૮—૨૯—૩૦

'તથાસ્તુ' એમ કહી, **સિદ્ધરાજ** ને પુરૂષોત્તમ (વિષ્ણુ–પુરૂષશ્રેષ્ઠ) માની, ભગવાન્ રૂદ્રે **સિદ્ધસર**ના તટ ઉપર નિવાસ કર્યો. ૨૩૧

હવે સ્મશાનાદિ તીર્થો, તેના તીર્થદેવતાઓની સાથે જે પ્રમાણે ઉદ્ભવ્યાં તે હે સુમતે! હું તને કહું છું. ૨૩૨

पीलुपर्णिकतीर्थे तु, पुनः प्रत्यक्षतां गता ।
पश्चिमाभिमुखी याता, तत्र देवी सरस्वती ॥ २३३ ॥
आषाढस्य सिताष्टम्यां, सुमते सा महानदी ।
महता च जलौघेन, मत्स्यकच्छप[1]धारिणी ॥ २३४ ॥
काकतीर्थस्य मध्येन, गान्धर्वे तीर्थमागता ।
सुमतिः परिपप्रच्छ, मार्कण्डेयं गुरुं पुनः ॥ २३५ ॥
काकतीर्थं कथं जातं, कस्मिन् स्थाने च तत्स्थितम् ।
किं प्रभावं सरस्वत्यां, श्रोतुं श्रद्धा परा मम ॥ २३६ ॥

श्रीमार्कण्डेय उवाच—

शृणु ब्रह्मन् यथा जातं, काकतीर्थमनुत्तमम् ।
यस्मिन् स्थाने स्थितं यच्च, तदाद्यं कथयामि ते ॥ २३७ ॥
काकतीर्थं सरस्वत्यां, दृष्टं स्वर्गप्रदं नृणाम् ।
महास्मशानमध्ये तु, दक्षिणस्यां दिशि स्थितम् ॥ २३८ ॥

---

પીલુપર્ણિક તીર્થમાં (ચાપોત્કટોનાં પાપાચરણથી અદ્રશ્ય થયેલાં સરસ્વતી) ફરીથી પશ્ચિમાભિમુખિ દેવી સરસ્વતી પ્રકટ થયાં. ૨૩૩

અષાઢ સુદ આઠમને દિવસ મહાનદી સરસ્વતી મોટાજલૌઘવડે મત્સ્યકચ્છપને ધારણ કરતાં **કાકતીર્થમાં**ના ગાંધર્વ તીર્થમાં આવ્યાં.

સુમતિ માર્કંડેય ગુરૂને ફરીથી પૂછવા લાગ્યા કે હે પ્રભો ! કાકતીર્થ કેવી રીતે ઉત્પન્ન થયું, તેમ જ સરસ્વતીના તટ ઉપર કયાં આવ્યું, તે વૃત્તાન્ત મને સંભળાવો. કારણ સરસ્વતીના પ્રભાવ સાથે તેને જાણવાની મને શ્રદ્ધા ઉત્પન્ન થઇ છે, તો કૃપા કરી, તે જણાવો. ૨૩૪—૩૫—૩૬

માર્કંડેય બોલ્યા–હે બ્રહ્મન્ ! તે સ્થાનમાં કાકતીર્થ કેવી રીતે ઉત્પન્ન થયું તે હું તમને સંભળાવું છું. ૨૩૭

આ **કાકતીર્થ** સરસ્વતીની સમીપમાં **મહાસ્મશાન** મધ્યે દક્ષિણ દિશામાં આવેલું છે, જેના દર્શન માત્રથી મનુષ્યોને સ્વર્ગનું ફળ પ્રાપ્ત થાય છે. ૨૩૮

---

१ धारिणा. P

पुरा तत्र हताः काका निशि न्यग्रोधपादपे ।
उलूकेन समागत्य, पतिता धरणीतले ॥ २३९ ॥
न्यवसन्नध्वगाः केचित्, तत्र स्थाने श्रमान्विताः ।
पाकार्थे च तदा रात्रौ, वह्निस्तैः प्रकटीकृतः ॥ २४० ॥
अथाध्वगेषु यातेषु, सोऽग्निर्वायुसमीरितः ।
प्रजज्वाल तदा कक्षे, तान् वै काकान् ददाह च ॥ २४१ ॥
आषाढस्य सिताष्टम्यां, जलौघेन सरस्वती ।
प्लावयामास तान् काकान्, वह्निना भस्मसात्कृतान् ॥२४२॥
महास्मशानमध्ये सा, वहमाना सरिद्वरा ।
स्तूयमाना तदा देवैर्महर्षिगणवन्दिता ॥ २४३ ॥
ततस्तद्वारिसंस्पर्शात्, स्मशानस्य प्रभावतः ।
दिव्यरूपधराः काकाः, सर्वे ते त्रिदिवं ययुः ॥ २४४ ॥

---

પહેલાં ત્યાં એક વડના ઝાડ ઉપર કોઈ ઘુવડે રાત્રીને વિષે ત્યાં રહેતા કાગડાઓનો નાશ કરી, તેમનાં શબ પૃથ્વી ઉપર પાડી નાંખ્યાં. ૨૩૯

(એક વખત) ત્યાં અગાડી કેટલાક શ્રમિત મુસાફરો રાત્રી પડી જવાથી વિશ્રાંતિ લેવા રહ્યા અને તેમણે ભોજન માટે ત્યાં અગ્નિ પ્રકટ કર્યો. ૨૪૦

પોતાના કાર્યથી (ભોજન વગેરેથી) નિવૃત્ત થઇ. તે મુસાફરોના ગયા પછી, વાયુના યોગે કરી, (ત્યાંનો) અગ્નિ વધુ પ્રજ્વલિત થયો, જેણે પેલા કાગડાઓનાં શબોને બાળી ભસ્મ કર્યાં. ૨૪૧

આષાઢ સુદ આઠમને દિવસે (આવેલા) સરસ્વતીના મહા-પ્રવાહે ભસ્મ થયેલા તે કાગડાઓનાં અંગો પ્લાવિત કર્યાં. ૨૪૨

દેવતાઓ અને મહર્ષિગણોથી સ્તુતિ કરાયેલાં, સરસ્વતી મહા-સ્મશાનની મધ્યમાં થઈને વહેવાં લાગ્યાં. ૨૪૩

દેવી(સરસ્વતી)ના સ્પર્શથી અને સ્મશાનના પ્રભાવયોગે તે. કાગડા દિવ્યરૂપ ધારણ કરી, સ્વર્ગમાં ગયા. ૨૪૪

